प्रस्तावना वा तत्र स्यात् कथोद्घातः प्रवर्तकम् ।
प्रयोगातिशयश्चेति त्रीण्यङ्गान्यामुखस्य तु ॥ २८ ॥

एषामङ्गानां स्वरूपं निरूप्यते—

स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातो द्विधैव सः ॥ २९ ॥
प्रस्तूयमानकालस्य गुणवर्णनया स्वतः ।
प्रविशेत् सूचितं पात्रं यत्र तत्स्यात् प्रवर्तकम् ॥ ३० ॥
एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥ ३१ ॥

---

प्राचीनालंकारमार्गेण तत्रैव भविष्यतीत्युपेक्ष्य, अल्पवक्तव्यां प्ररोचनामुदाहरणसमय एव
दर्शयिष्यन्, संप्रति साङ्गस्यामुखस्य स्वरूपनिरूपणं प्रतिजानीते—अथेति ॥
तत्र पुरुषविशेषप्रयोज्यः संस्कृतप्रधानो वाग्व्यापारो भारती । प्रस्तुतार्थप्रशंसनेन
श्रोतृणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । तदुक्तम्—'भारती संस्कृतप्रायो वाग्व्यापारो
नटाश्रयः । उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना ॥' इति । 'आमुखविशेषः प्रस्तावना'
इति केचित् । 'प्रस्तावनाविशेष आमुखम्' इत्यपरे । 'अस्यैव पर्यायः प्रस्तावना' इति
दशरूपककारः । तन्मतानुसारेण लक्षणमाह—सूत्रधार इति ॥ द्वावत्र सूत्रधारौ-
एकः पूर्वरङ्गविधायकः, इतरस्तु नटस्थापकाद्यपरपर्यायः पूर्वसूत्रधारसदृशगुणाकृतिः
प्रस्तावनाप्रवर्तकः । अत्र तु नटीमारिषादिसम्भाषणादयमेव विवक्षितः । अस्य गृहिणी
नटी ॥ मारिषः पारिपार्श्विकः । नर्मसचिवो विदूषकः । एतेषां लक्षणानि भावप्रकाशे—
'आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः । रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥
चतुराऽऽतोद्यभेदज्ञा तत्कलासु विशारदा । करणाभिनयज्ञा च सर्वभाषाविचक्षणा ॥
नटानुयोक्त्री कृत्येषु नटस्य गृहिणी नटी । भरतेनाभिनीतं यो भावं नानारसाश्रयम् ।
परिष्करोति पार्श्वस्थः स भवेत् पारिपार्श्विकः ॥ तदात्वप्रतिभो नर्मचतुर्भेदप्रयोगवित् ।
वेदविन्नर्मवादी यो नेतुः स स्याद् विदूषकः ॥' इति । स्वकार्यमभिमतरूपकप्रयोगेण
परिषदाराधनात्मकं प्रस्तुतं काव्यार्थरूपं वस्त्वादिचतुष्टयम्, तदाक्षेपिण्या उभयप्रति-
पादिकयेत्यर्थः । अत एव चित्रोक्त्या नाट्यादिकं यद् ब्रूते तदामुखमित्यर्थः । तदुक्तम्
—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यार्थं स्थापयेन्नटः ॥
दिव्यमार्त्यैं स तद्रूपो मिश्रमन्यतरस्तयोः । सूचयेद् वस्तु बीजं वा मुखं पात्रमथापि वा ॥'
इति । स्थापको दिव्यं वस्तु दिव्यो भूत्वा, मार्त्यं वस्तु मर्त्यो भूत्वा, मिश्रं वस्तु
उभयोरन्यतरो भूत्वा सूचयेदित्यर्थः ॥ २७—२८ ॥ अथामुखाङ्गत्रये कथोद्घातं लक्षयति—
स्वेति ॥ पात्रं कर्तृ । सूत्रिणः सूत्रधारस्य वाक्यमर्थं वाक्यार्थं वा । प्रवर्तकं
लक्षयति—प्रस्तूयमानेति ॥ कालस्य 'ऋतुं कंचिदुपादाय' इति वचनप्राप्तस्य

वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्र स्वभावतः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥ ३२ ॥
वाकेल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ३३ ॥

एषां स्वरूपं निरूप्यते—

गूढार्थपदपर्यायमालारूपेण प्रश्नोत्तरमालारूपेण चोद्घात्यकं द्विविधम् । अवलगितमपि द्विविधम् ।

यत्रैकत्र समावेशात् कार्यमन्यत्र सिद्ध्यति ।
वस्तुनोऽन्यत्र वा यत्स्यात् द्विधाऽवलगितं मतम् ॥३४॥

अन्यकार्यच्छद्मना अन्यकार्यकरणम्, अन्यकार्यप्रसङ्गात् प्रकृतकार्यसिद्धिश्च । असद्भूतं मिथः स्तोत्रं प्रपञ्चः । त्रिगतं द्विविधं—पूर्वरङ्गाङ्गं

---

शरद्वसन्तादेर्गुणवर्णनया आसन्नप्रवेशपात्रसाम्येनेति भावः । 'प्रकटितरामाम्भोजः कौशिकवाग्लक्ष्मणानन्दी । सुरचापनमनहेतोरयमवतीर्णः शरत्समयः ॥' इत्यत्र रामलक्ष्मणविश्वामित्राणां शरद्वर्णनसाम्येन प्रवेशकथनात् प्रवर्तकम् । प्रयोगातिशयं लक्षयति—**एष इति** ॥ एतदिदमोरन्यतरशब्दप्रयोगेणोपक्षेपादित्यर्थः ॥ ३०—३१ ॥ नन्वनन्तरमुद्घात्यकादीनि वीथ्यङ्गान्युच्यन्ते, कथं तेषामामुखे संगतिरित्याशङ्क्योभयेषामङ्गानामभेदादविरोध इति संगमयन्नाह—**वीथ्यङ्गानीति** ॥ न चैवं वीथ्यामुखयोरङ्गिनोर्नाममात्रभेद इति शङ्कनीयम् । वीथ्यां कथोद्घातादिविशेषाङ्गविकलत्वं सूत्रधारादिसंबन्धवैधुर्यमुद्घात्यकादिसर्वाङ्गावश्यकत्वं पाक्षिकप्राधान्यं च । आमुखे पुनरेतद्वैरूप्यमित्यनयोरत्यन्तविलक्षणत्वात् । अथ साधारणाङ्गान्युद्देशपूर्वकं लक्षयति—**उद्घात्यकेत्यादिना** ॥ ३२ ॥ ३३ ॥ अन्योन्यालापे गूढार्थपदं ततः पर्यायश्चेत्येवमेका माला । प्रश्नोत्तरं चेति द्वितीया । द्वेधावलगितमित्याह—**अन्यकार्येति** ॥ पूर्वत्र प्रकृतकार्यसिद्धेः प्रयत्नपूर्वकत्वम्, उत्तरत्र प्रासङ्गिकत्वं चेत्यर्थः । असद्भूतं पारदार्यादिप्रसङ्गेन दुष्टम् । पूर्वाचार्यास्तु स्तोत्रं हास्येन विशिषन्ति—'असद्भूतं मिथः स्तोत्रं प्रपञ्चो हास्यकृन्मतः' इति । त्रिगतं द्विविधम्—तत्रैकं पूर्वरङ्गाङ्गमपरमामुखाङ्गमिति विविञ्चन्, उभयोः क्रमेण लक्षणमाह—**पूर्वरङ्ग इति** ॥ नटादिसंलाप इत्यत्रादिग्रहणान्मारिषसूत्रधारौ गृह्येते । तदुक्तं **भावप्रकाशे** पूर्वरङ्गप्रस्तावे—'सूत्रधारो नटश्चैव तथा वै पारिपार्श्विकः । संलापं यत्र कुर्वन्ति तदेव त्रिगतं स्मृतम् ॥' इति । **अत्र त्विति** ॥ प्रस्तावनायाम् । **साम्यादिति** ॥ शब्दसाम्यादित्यर्थः । तदुक्तं **दशरूपके**—'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह ।

प्रस्तावनाङ्गं चेति । पूर्वरङ्गे नटादिसंलापः, अत्र तु साम्यादनेकार्थयोजनं त्रिगतम् । प्रियसदृशैर्वाक्यैरप्रियैर्विलोभनं छलम् । साकाङ्क्षस्यापि वाक्यस्य निवर्तनमुक्तिप्रत्युक्तिः वाक्केलिर्द्विविधा । स्पर्धयान्योन्यवाक्याधिक्यमधिबलम् । सहसोदितं प्रस्तुतविरोधि गण्डम् । रसवशादुक्तान्यथाव्याख्यानमवस्यन्दितम् । सोपहासनिगूढार्थप्रहेलिका नालिका । असंबन्धकथाप्रायः प्रलापोऽसत्प्रलापः । अन्यार्थं हास्यलोभकरं वचनं व्याहारः । दोषाणां गुणत्वप्रतिपादनं मृदवम् । एतेषां मध्ये यथासंभवं कानिचित् प्रस्तावनायां प्रयोक्तव्यानि ।

अथ दशरूपकाणां स्वरूपं निरूप्यते । तत्र

साङ्गैर्मुखप्रतिमुखगर्भमर्शोपसंहृतैः ।
पूर्णं प्रकृतिरन्येषामाधिकारिकवृत्तवत् ॥ ३५ ॥
वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते ।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥ ३६ ॥

तत्र नान्दीस्वरूपं निरूप्यते---

---

नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥' इति । छलं व्यक्तम् । **साकाङ्क्षस्येति ॥** निवर्तनम् *'उपरि प्रस्तुतम् ओं नमः शिवाय' इतिवदिति भावः । उक्तेः प्रत्युक्तिरुक्तिप्रत्युक्तिः । अत्र द्विस्त्रिरिति शेषं प्राञ्चः पूरयन्ति । **अन्योन्यवाक्येति ॥** परस्परसामर्थ्यप्रकाशकवाक्याधिक्यमित्यर्थः । सहसोदितमविमृश्योक्तं प्रस्तुतविरोधि गण्डम् । 'अर्थभेदेन प्रस्तुतोपयोगि गण्डम्' इति केचित् । तदुक्तम्—'गण्डं प्रस्तुतसंबन्धि भिन्नार्थं सहसोदितम्' इति । रसवशादित्युक्तेन संबध्यते, न तु व्याख्यानेन । **सोपहासेति ॥** निगूढो गोपितो बाह्य आभ्यन्तरो वा मुख्यार्थो यत्र सा तथोक्ता । अत एव अन्तर्लापा बहिर्लापा चेति द्विविधा प्रहेलिका । तदुक्तं **विदग्धमुखमण्डने**—'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥' इति । **प्रलाप इति ॥** रसस्वप्नोन्मादशैशवादिप्रयुक्त इति शेषः । अत एव नायमसंगतिनामि वाक्यदोषः । **अन्यार्थमिति ॥** अर्थान्तरोद्देशेन हास्यप्रलोभकारीत्यर्थः । **दोषाणामिति ॥** वैपरीत्यस्याप्युपलक्षणमेतत् । तदुक्तम्—'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्' इति । एतेषामङ्गानां कार्त्स्न्येन

---

* 'कुलशोकहरं कुमारमेकं कुहनाभैरवपारणोन्मुखाभ्याम् ।
उपहूय कृतादरं पितृभ्यामुपरि प्रस्तुतम् ओं नमः शिवाय ॥' इति **महेश्वरानन्दे** ।

**अर्थतः शब्दतो वापि मनाक् काव्यार्थसूचनम् ।**
**यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ॥**
**द्वाविंशत्या पदैर्वाऽपि सा नान्दी परिकीर्तिता ॥ ३७ ॥**

नाटकादिरूपकाणामादौ विहितं पद्यं नान्दीत्युच्यते । **वेणीसंहारेऽ**ष्टपदा नान्दी । **अनर्घराघवे** द्वादशपदा । **बालरामायणे** द्वाविंशतिपदा । **कैश्चित्** नान्द्यां पदनियमो नाभ्युपगतः ।

नान्द्यनन्तरं प्रविष्टेन सूत्रधारेण रङ्गप्रसाधनपुरःसरं भारतीवृत्त्याश्रयणेन श्लोकैः काव्यार्थः सूचनीयः । तथोक्तं **दशरूपके**—

'रङ्गं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥' इति ।

---

प्रयोगनिर्बन्धो नास्तीत्याह—**एतेषामिति** ॥ रूपकोपोद्घातरूपां प्रस्तावनां निरूप्य संप्रति रूपकस्वरूपनिरूपणं प्रतिजानीते—**अथेति** ॥ तत्र सर्वप्रकृतित्वेन प्रधानस्य नाटकस्य स्वरूपमाह—**साङ्गैरिति** ॥ यत्रेत्थमिदं कर्तव्यमिति कृत्स्नाङ्गसमेतप्रधानोपदेशः सा प्रकृतिः । यथा दर्शपूर्णमासादिः । कृत्स्नाङ्गोपदेशाभावेऽन्यतः सिद्धाङ्गाकाङ्क्षायां तद्वदिदं कर्तव्यमिति अतिदेशेन यत्रानुपदिष्टाङ्गपरिपूरणं सा विकृतिः । यथैन्द्राग्नादिः । तद्वदत्रापि संधिपञ्चकाङ्गादिकृत्स्नोपदेशेन परिपूर्णत्वादातिदेशिकाङ्गयोगेन विकृतिभूतानां प्रकरणादीनां नाटकं प्रकृतिः । तदेतदाह—**प्रकृतिरन्येषामिति** ॥ फलस्वाम्यमधिकारः । तद्वान् अधिकारी । अधिकारेणाधिकारिणा वा निर्वृत्तमाधिकारिकं प्रधानम् । वृत्तशब्देनात्र प्रख्यातमुचितं चेतिवृत्तं विवक्षितं, तद्युक्तमित्यर्थः । प्रधानमित्यनेन रसान्तराणामङ्गत्वेनानुप्रवेशः सूच्यते । प्रख्यातो **रामायणादि**प्रसिद्धः नायको धीरोदात्तो राजर्षिर्दिव्यो वा । तदुपेतं नाटकम् । एवमेवोक्तं **दशरूपके**—'अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान् । कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ॥ प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः । तत् प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ॥ यत् तत्रानुचितं किंचिन्नायकस्य रसस्य वा । विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥' इति । पूर्वरङ्गो नाम नाटकादौ कर्तव्यः प्रत्यूहपरिपन्थी कर्मविशेषः । तदुक्तम्—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥' इति । तस्य प्रत्याहारादीनि द्वाविंशतिरङ्गानि । तन्मध्येऽवश्यं कर्तव्या नान्दी । तदुक्तं **बादरायणेन**—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इति । अतस्तत्स्वरूपं निरूप्यत इत्याह—**तत्र नान्दीति** ॥ 'चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला । आशीर्नमस्क्रिया वस्तुनिर्देशो वा प्रकल्प्यते ॥' इत्यादिविशेषोऽप्यत्र द्रष्टव्यः । असाधारणत्वमस्या निवारयन् व्याचष्टे—**नाटकादीति** ॥ स्पष्टमन्यत् ॥ ३४—३७ ॥ अनन्तरकर्त-

एषा प्रक्रिया नाटकस्यैव मुख्या ।

अथ प्रकरणम्—

उत्पाद्येनेतिवृत्तेन धीरशान्तप्रधानकम् ।
शेषं नाटकतुल्याङ्गं भवेत् प्रकरणं हि तत् ॥ ३८ ॥

अथ भाणः—

भारतीवृत्तिभूयिष्ठं शौर्यसौभाग्यसंस्तवैः ।
सूच्येते वीरशृङ्गारौ विटेन निपुणोक्तिना ॥ ३९ ॥
कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम् ।
एकोऽङ्को मुखनिर्वाहौ यत्र भाणः स संमतः ॥ ४० ॥

---

ब्यमाह—**नान्द्यनन्तरमिति** ॥ सूत्रधारेण द्वितीयेन । रङ्गप्रसाधनं नाम सभापतौ उपविष्टे रङ्गप्रविष्टसाम्प्रदायिकसंपादितो यवनिकापगमाविर्भूतपात्रविशेषप्रकीर्णपुष्पाञ्जलि-परिष्कृतो नृत्तगीतवाद्यविशेषप्रयोगः केवलगीतवाद्यविशेषप्रयोगो गीतादेरेकैकशः प्रयोगो वा । एतच्च 'संगीतज्ञैर्बुधैः सार्धं नायके प्रेक्षके स्थिते । प्रविश्य रङ्गभूमिं ते तिष्ठन्तः सांप्रदायिकाः ॥' इत्यादिना **सङ्गीतरत्नाकरे** प्रपञ्चितम् । तदपेक्षायां तत्रैव द्रष्टव्यम् । भारत्या लक्षणमुक्तम् । अत्रार्थे संवादमाह – **रङ्गमिति** ॥ अत्र स्वोक्तिसंवादवाक्य-गतयोः काव्यार्थसूचनभारतीवृत्त्याश्रयणयोरुद्देश्यविधेयभाववैरूप्यं फलभेदाभावान्न दोषायेति द्रष्टव्यम् । 'नाटकेऽङ्का न कर्तव्याः पञ्चन्यूना दशाधिकाः' इति । अस्याः सामग्र्या असाधारणत्वमाह—**एषेति** ॥ मुख्या नियतेत्यर्थः । प्रकरणं लक्षयति—**उत्पाद्येनेति** ॥ इतिवृत्तेनोपलक्षितम् । शेषं वस्तु । नाटकतुल्या-न्यङ्गान्यामुखादीनि यत्र तत् तथोक्तम् । अयमतिदेशो यथायोगमुत्तरत्राप्यनु-षञ्जनीयः । धीरशान्तप्रधानकमित्यत्र प्रधानग्रहणमुद्देष्टव्यधमन्तिरसूचकम् । तानि च **दशरूपके**—'अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् । अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥ धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् । शेषं नाटकवत् संधिप्रवेशकरसा-दिकम् ॥' विपदन्तरितार्थसिद्धिः सापायः । किंच 'त्रेधाऽत्र नायिका ज्ञेया कुलस्त्री गणिकोभयम् । तद्वशाद् रूपकं त्रेधा तृतीयं धूर्तसंकुलम् ॥ गणिका प्राकृतं ब्रूते कुलस्त्री संस्कृतं तथा ।' इति । विकृत्यन्तरापेक्षया संध्यादीनां प्रकर्षेण करणात् प्रकरणम् ॥ ३८ ॥ भाणं लक्षयति—**भारतीति** ॥ शौर्यसौभाग्ययोः संस्तवैः । धूर्ता द्यूतकरादयस्तेषां चारित्रं स्वेनान्येन वाऽनुभूतमिति शेषः । स्पष्टमन्यत् । 'एकपात्रप्रयोज्येऽस्मिन् कुर्या-दाकाशभाषितम् । अन्येनानुक्तमप्यन्यो वचः श्रुत्वेव यद्वदेत् ॥ इति किं भण-सीत्येतद् भवेदाकाशभाषितम् । लास्याङ्गदशकं चात्र योज्यं गेयपदादिकम् ॥ **भावप्रकाशिकाद्येषु** तत्प्रपञ्चः परीक्ष्यताम् । अत्रोपरम्यतेऽस्माभिरतिविस्तरभीरुभिः ॥' यत्रैक एव विटः स्वकृतं परकृतं वा भारतीवृत्तिभूयिष्ठं भणति स भाणः ॥ ३९—४० ॥

अथ प्रहसनम्—

यत्र सन्ध्यङ्गवृत्त्यङ्गवर्णनं भाणवन्मतम् ।
हास्यो रसः प्रधानं स्याद्भवेत् प्रहसनं हि तत् ॥ ४१ ॥

तच्च त्रिविधम्—शुद्धं वैकृतं संकीर्णं चेति । तत्र शुद्धम्—

पाषण्डविप्रप्रभृतिचेटीचेटसमाकुलम् ।
वेषभाषादिसहितं शुद्धं हास्यवचोऽन्वितम् ॥ ४२ ॥

अथ वैकृतम्—

कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ।
प्रहासाभिनयप्रायं वैकृतं तत् प्रकीर्त्यते ॥ ४३ ॥

अथ संकीर्णम्—

यद् वीथ्यङ्गैः समाकीर्णं संकीर्णं धूर्तसंकुलम् ॥ ४४ ॥

अथ डिमः—

यत्र वस्तु प्रसिद्धं स्याद् वृत्तयः कैशिकीं विना ।
नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ॥ ४५ ॥

---

प्रहसनं लक्षयति—**यत्रेति** ॥ हास्यवचःप्रचुरत्वादिदं प्रहसनमुच्यते । तत्र श्रोत्रियादिवेषभाषाविशिष्टं शुद्धम् । विटकामुकवृद्धकञ्चुकिप्रमुखवचोवेषानुकारि वैकृतम् । वीथ्यङ्गविशिष्टं धूर्तचेष्टितसंकुलं संकीर्णम् । तदेतत् त्रिविधं विभज्य क्रमेण लक्षयति—**तच्चेत्यादिना** ॥ तत्र शुद्धमाह—**पाषण्डेति** ॥ पाषण्डाः शाक्यादयः । विप्रा जातिमात्रोपजीविनोऽत्यन्तमृजवो वा । प्रभृतिपदेन तादृशा एव वैश्यादयो गृह्यन्ते । चेट्यादयो लक्षितचराः । प्रधानभूतहास्यरसविभावभूतैरेतैः समाकुलम् । **वेषभाषादिसहितमिति** ॥ अर्थादेतेषामेवेति गम्यते । विकृतमाह—**अथेति** ॥ कामुकादयो भुजङ्गाद्याः । तेषां वचोवेषौ येषां तैस्तथोक्तैः । तथा षण्डकञ्चुकितापसैस्तद्वेषभाषायुक्तैरेवान्वितमिति शेषः । संकीर्णमाह—**यदिति** ॥ वीथ्यङ्गैरुद्धात्यकादिभिः । धूर्ताश्चोरद्यूतकरादयः ॥ ४१-४४ ॥ डिमं लक्षयति—**यत्रेति** ॥ प्रसिद्धं वस्तु त्रिपुरदाहादयः । वृत्तयः कैशिकीवर्जास्तिस्रः । रसा दीप्ता एव । अत एवोक्तम्—'शृङ्गारहास्यविधुरैः रसैर्दीप्तैर्निरन्तरः' इति । अतः शान्तरसस्य प्रसक्तिरेव नास्तीति भावः । रौद्रः स्थायित्वेन प्रधानं येषां ते रौद्रप्रधानकाः । मर्शो विमर्शः । मायादयोऽनुभावाः । तत्र मायेन्द्रजालयोर्लक्षणं **भावप्रकाशे**—'सद्रूपोद्भावना माया स्वत

भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।
हास्यशृङ्गाररहिता रसा रौद्रप्रधानकाः ॥ ४६ ॥
चत्वारोऽङ्काः संधयश्च चत्वारो मर्शवर्जिताः ।
मायेन्द्रजालसंग्रामसूर्यचन्द्रग्रहादयः ॥
शेषं नाटकवत् सर्वं स डिमः परिकीर्त्यते ॥ ४७ ॥

अथ व्यायोगः—

यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः ।
गर्भावमर्शराहित्यं डिमवद् रसपोषणम् ॥
एकवासरकार्यं च स व्यायोगो महारणः ॥ ४८ ॥

अथ समवकारः—

यत्रामुखं नाटकवत् संधयो मर्शवर्जिताः ।
नेतारो द्वादश पृथक्फला देवासुरादयः ॥ ४९ ॥
वीरप्रधानाश्च रसास्त्रयोऽङ्कास्तेषु च क्रमात् ।
वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ॥ ५० ॥
पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः ।
धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः ॥ ५१ ॥

---

एवासतः पुरा । अथवाऽन्यपदार्थानामन्यथा कृतिरेव वा ॥ अदेशकालपारोक्ष्यं परोक्षस्यैव
वस्तुनः । मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः ॥' इति । चन्द्रग्रहादय इत्यत्रादि-
शब्देनोल्कानिर्घातादयो गृह्यन्ते । गतमन्यत् । 'डिम सङ्घाते' इति धातोः नायक-
संघातव्यापारात्मकत्वात् डिमः' इति धनिकः ॥ ४५--४७ ॥ व्यायोगं लक्षयति—
यत्रेति ॥ शान्तशृङ्गारहास्यरहिता रौद्रप्रधानकाः षड् रसाः कैशिकीवर्जमितरवृत्तय-
श्चेत्येतड्डिमवद्रसपोषणमित्यतिदेशेन लभ्यते । अस्त्रीनिमित्तोऽत्र महारणः । तदुक्तम्—
'अस्त्रीनिमित्तसंग्रामो जामदग्न्यजये यथा ।' इति । व्यायुज्यन्तेऽस्मिन् बहवः
पुरुषा इति व्यायोगः ॥ ४८ ॥ समवकारं लक्षयति—यत्रेति ॥ 'शेषं नाटकतुल्याङ्गम्'
इत्यतिदेशानुषङ्गादेवानुपदिष्टामुखाद्यखिलाङ्गलाभेऽप्यत्र 'आमुखं नाटकवत्' इत्यतिदेशो
रूपकाणामिदमावश्यकमिति सूचनायेति द्रष्टव्यम् । एककार्याणामपि नायकानां पयोधि-
मथने सुधालक्ष्मीप्रमुखफलभेदं दृष्ट्वाऽऽह—नेतार इति ॥ वीरप्रधाना इत्यनेन
शृङ्गारादीनामङ्गत्वेनानुप्रवेशः । अत एवात्र मन्दकैशिक्यो वृत्तयश्चेति गम्यते ।
त्रयोऽङ्का इति ॥ प्रथमेऽङ्के मुखप्रतिमुखयोर्द्वितीये गर्भस्य तृतीये निर्वहणस्य च

**प्रथमेऽङ्के निबद्धव्या कथा यामत्रयावधिः ।**
**यामावधिर्द्वितीयेऽङ्के तृतीयेऽङ्केऽर्धयामिका ॥ ५२ ॥**
**असौ समवकारः स्याद् वीथ्यङ्गैः कैश्चिदन्वितः ॥**

अथ वीथी—

**यत्र भाणवदङ्गानां क्लृप्तिर्वृत्तिस्तु कैशिकी ॥ ५३ ॥**
**शृङ्गारः परिपूर्णत्वात् सूचनीयोऽतिभूयसा ।**
**उद्घात्यकादीन्यङ्गानि सा वीथी वीथिवन्मता ॥ ५४ ॥**

अथाङ्कः—

**यत्रेतिवृत्तं प्रख्यातं प्रधानं करुणो रसः ।**
**स्त्रीणां विलासो वाग्युद्धं नेतारः प्राकृता नराः ॥**
**भाणवत् संधिवृत्त्यादि स उत्सृष्टोऽङ्कसंज्ञकः ॥ ५५ ॥**

---

निबन्धो द्रष्टव्यः । अङ्कत्रये कपटविद्रवशृङ्गारत्रिकाणां त्रयाणां क्रमेण निबन्ध इत्याह—**तेषु च क्रमादिति** ॥ कपटो नाम मोहः । तदुक्तं **भावप्रकाशे**—'कपटस्य स्वरूपं तु भ्रमो मोहात्मकः स्मृतः' इति । स च निमित्तानुरोधेन त्रिविध इत्याह—**वस्तुस्वभावेति** ॥ 'वस्तुस्वभावकपटः क्रूरसत्त्वादिसंभवः । दैविकः कपटो वह्निवर्षवातादिसंभवः ॥ शत्रुजः कपटस्तत्र संग्रामादिसमुद्भवः ॥' कपटजन्यं पलायनं विद्रवः । सोऽपि कपटवत् त्रिविध इत्याह—**पुररोधेति** ॥ पुररोधरणादिनिमित्तोऽरिकृतो विद्रवः । अग्न्यादिनिमित्तो दैविको विद्रवः । व्यालव्याघ्रादिनिमित्तो वस्तुस्वभावकृतो विद्रवः । व्रतादिजनितः कामो धर्मशृङ्गारः । महाराज्याद्यर्थप्राप्तिहेतुरर्थशृङ्गारः । परदारसुरापानादिसुखललितः कामशृङ्गारः । अङ्कत्रयवर्तिनो वस्तुनः कालनियममाह—**प्रथमेऽङ्के इत्यादि** ॥ यथालाभमुद्घात्यकादीनामनुप्रवेश इत्याह—**वीथ्यङ्गैरिति** ॥ समन्तादवकीर्यन्तेऽस्मिन्नर्था इति समवकारः । शेषं स्पष्टम् ॥ ४९—५२ ॥ वीथीं लक्षयति—**यत्रेति** ॥ 'एकोऽङ्को मुखनिर्वाहौ' इत्यादिको भाणवदित्यतिदेशलभ्यः । विशेषमाह—**वृत्तिरित्यादिना** ॥ शृङ्गारोऽतिभूयसा सूचनीय इत्यनेन रसान्तराणामत्यल्पशः सूचनं गम्यते । उद्घात्यकादीनि प्रस्तावनायामुक्तानि । यत्रैवं सामग्री सा वीथी । वीथीवदङ्गानां मार्गवत् पङ्क्तिबद्धा मता । एकपात्रेण पात्रद्वयेन वा योगोऽत्रान्यतोऽवगन्तव्यः । इदमप्यत्रानुसंधेयम् । 'अस्यां प्रायेण लास्याङ्गदशकं योजयेन्न वा । सामान्या परकीया वा नायिकाऽत्रानुरागिणी ॥ वीथ्यङ्गप्रायवस्तुत्वान्नोचिता कुलपालिका । लक्ष्यमस्यास्तु विज्ञेयं **माधवीवीथिकादिकम्** ॥' इति

अथेहामृगः—

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ॥ ५६ ॥
धीरोद्धतौ स्त्रियं दिव्यां हर्तुकामौ च कामुकौ ।
अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥ ५७ ॥

एष प्रक्रिया दशरूपकोक्तरीत्यनुसारेण ।

---

॥ ५४ ॥ अङ्कं लक्षयति—यत्रेति ॥ इतिवृत्तं प्रख्यातमुत्पाद्यं वेति केचित् । प्राकृताः दिव्यव्यतिरिक्ताः । अत एव शारदातनयेनोक्तम्—'दिव्यैरयुक्तः पुरुषैः शेषैरन्यैः समन्वितः' इति । सुगममन्यत् । य एवंविधः सोऽयं पुत्रादीनामिव प्राकृतनायकादीनामाश्रयत्वादङ्क इति संज्ञितः । अयम् 'अङ्को नानाप्रकार—' इति लक्षणमुल्लङ्घ्य सृष्टत्वादुत्सृष्ट इत्युच्यते । अत एव 'उत्सृष्टिकाङ्क इति नाटकान्तर्गताङ्कव्यवच्छेदार्थम्' इति धनिको व्याचष्ट ॥५५॥ ईहामृगं लक्षयति—मिश्रमिति ॥ गर्भावमर्शरहितास्त्रयः संधयो यस्मिंस्तत् त्रिसन्धिकम् । आभासरसयोः अनुरागशून्यनायिकानुरक्तत्वादिति भावः । अत एवोक्तं दशरूपके—'दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः' इति ॥ अवधं युद्धम् अजायुद्धकल्पमित्यर्थः । गतमन्यत् । मृगवदलभ्यां नायिकां नायकोऽस्मिन् ईहते ईहामृगः । अस्या रूपकसामग्रयाः स्वोन्मेषमूलत्वं वारयति—एषेति ॥५६–५७॥

—•—

## नाटकोदाहरणप्रारम्भः ।

तत्र साङ्गं नाटकमुदाह्रियते ।

भद्रां कौतुकवेदिमागतवतोरन्योन्यमासेदुषोः
शैलैर्मेरुहिमाचलप्रभृतिभिर्देवैर्हरीन्द्रादिभिः ।
व्याप्तां पार्श्वयुगे पुरोऽम्बुजभुवा पश्चाच्च मेनादिभिः
साध्वीभिः शिवयोरपाङ्गसरणिर्वैवाहिकी पातु वः ॥ १ ॥

**एषा द्वाविंशतिपदा नान्दी । अस्यां विवाहप्रवृत्तयोः शिवयोः वर्णनया सकलनरेन्द्रपरिकरस्य प्रतापरुद्रस्य काकतीयराज्यलक्ष्मीप्राप्तिर्नाटकप्रयोजनरूपा किंचिदर्थशक्त्या सूच्यते ।**

देयात् सिद्धिं महालक्ष्मीर्जगद्रक्षाधुरंधरा ।
विष्णुवक्षःस्फुरन्मालाविहितालयतोरणा ॥ २ ॥

**एषा च नान्दी प्रतापरुद्रराज्यलक्ष्मीमङ्गलविधिलक्षणा ।**

नान्द्यन्ते **सूत्रधारः** (समन्तादवलोक्य सहर्षम्) —

---

केवलोद्देशलक्षणाभ्यां रूपकसामग्र्या दुर्ग्रहत्वाद् रूपकान्तराणामेतदुदाहरणेनोदाहृतकल्पत्वं हृदि निधाय जिज्ञासुजनानुग्रहार्थं नाटकमात्रमत्रोदाह्रियत इति प्रतिजानीते—**तत्रेति** ॥ अथ साङ्गं नाटकमुदाहर्तुमारभमाणो **विद्यानाथ**स्तत्प्रत्यूहपरिपन्थिनः पूर्वरङ्गस्य प्रधानाङ्गभूतामाशीरूपमङ्गलान्वितां नान्दीमादावुदाहरति—**भद्रामिति** ॥ भद्रां विचित्रवितानमणितोरणादिपरिष्कारेण मङ्गलाम् । पार्श्वयुगे वधूवरप्रत्यासन्नैर्मेरुहरिप्रभृतिभिर्व्याप्ताम् । पुरोभागेऽम्बुजभुवा याज्ञिकेन ब्रह्मणा । तदुक्तं **श्रीकण्ठलीलायां** कल्याणकाण्डे—‘दाता महीभृतां नाथो होता देवश्चतुर्मुखः । वरः पशुपतिः साक्षात् कन्या विश्वारणिस्तथा ॥’ इति । मेना हिमाचलमहिषी । तदादिभिः साध्वीभिः पुरन्ध्रीभिः पश्चाद्भागे व्याप्तां कौतुकवेदिं विवाहोत्सववितर्दिकामागतवतोः प्राप्तयोः अन्योन्यमासेदुषोर्यथा मिथः संस्पर्शस्तथासीनयोरित्यर्थः । ‘यथास्थानमुपविश्यान्वारब्धायाम्’ इति **आपस्तम्ब**स्मरणात् । शिवयोः पार्वतीपरमेश्वरयोः । ‘पुमान् स्त्रिया’ इत्येकशेषः । विवाहे भवा वैवाहिकी । अपाङ्गसरणिरन्योन्यदर्शनमित्यर्थः । इदमपि तत्रैवोक्तम् । ‘देवोऽपि देवीमालोक्य सलज्जां हिमशैलजाम् । न तृप्यति नतापाङ्गी सा च देवं वृषध्वजम् ॥’ इति । स वः पात्विति संबन्धः । लक्ष्ये लक्षणं योजयति—**एषेति** ॥ **नान्द्यन्त इति** ॥ नान्दीं

कथमासूत्रित एव समन्ततो रङ्गमङ्गलविधिः !

तथाहि—

आविष्कुर्वन्ति मुरजाः सर्वतः शब्दमाधुरीम् ।
सङ्गीतोपनिषद्विद्यां वीणाः प्रस्तावयन्त्यमूः ॥ ३ ॥

एतद्रङ्गप्रसाधनम् ।

(सप्रहर्षम् )—

भूभृत्सुतामहादेवौ पितरौ यस्य विश्रुतौ ।
नरनागाकृतिः श्रीमान् स देवः श्रेयसेऽस्तु वः ॥ ४ ॥

(ऊर्ध्वमवलोक्य)—चिरादनुकूलेन कालेनापगतदुर्दिनानि दिङ्मुखानि ।

यतः—

विहरद्राजहंसश्रीर्विलसन्मित्रमण्डलः ।
प्रसाधयति सन्मार्गं प्रसन्नः शरदागमः ॥ ५ ॥

काव्यार्थसूचकाभ्यां श्लोकाभ्यामृतुसमाश्रणेन संस्कृतप्रायनराश्रितवाग्व्यवहाररूपा भारती वृत्तिः कथिता ।

(सविनयमुपसृत्य सभाभिमुखमञ्जलिं बद्ध्वा)

---

प्रयुज्य पूर्वसूत्रधारे विनिर्गत इत्यर्थः । **सूत्रधार इति** ॥ द्वितीयो नटाख्य इत्यर्थः । रङ्गं प्रविष्ट इति शेषः । इदमनुपदमेव 'रङ्गं प्रसाध्य' इत्यादिना तत्कृत्यमुक्तं, तदाह—**समन्तादिति** ॥ सहर्षं सूचनमात्रादेव सांप्रदायिकैः सन्नद्धमानद्धादिकमिति सप्रसादमित्यर्थः । त्रिविधं रङ्गप्रसाधनमुक्तम् । तत्र द्वितीयमुदाहरति—**आविरिति**। शब्दानां वाद्यविशेषाणां माधुरीं श्रोत्रप्रियत्वम् । माधुर्यशब्दात् ष्यञन्तात् ङीष्प्रत्यये *'यस्य' इति यलोपे माधुरीति सिद्धम् । अत एवाह **वामनः**—'ष्यञः षित्करणादीकारो बहुलम्' इति । सङ्गीतोपनिषत् संगीतरहस्यम् । तामेव विद्याम् । उभयत्र मौरजिका वैणिकाश्च लक्ष्यन्ते । अथ 'श्लोकैः काव्यार्थसूचकैः' इत्यादिना भारतीवृत्त्याश्रयण मुक्तम् । तदुदाहरति—**भूभृदिति** ॥ यस्य देवस्य भूभृत्सुतामहादेवौ पार्वतीपरमेश्वरौ पितरौ मातापितराविति विश्रुतौ । 'पिता मात्रा' इत्येकशेषः । कदाचिल्लीलया गौरीगिरीशौ गजाकारेण विहरमाणौ गजाननमजीजनताम् । तदुक्तं **स्कान्दपुराणे**—'प्रशस्तमत्तमातङ्गवपुर्भूत्वाऽथ भूतपः। भ्रममाणो वने

---

*'यस्य' इत्यधिकारे पठितेन 'हलस्तद्धितस्य' इति सूत्रेण यलोप इत्यर्थः ।

भो भो मध्यमभुवनभागधेयविवर्तस्यैकशिलानगरपुण्यराशेः काकतीयकुलदेवतायाः स्वयम्भूदेवस्य सततमहोत्सवमासेदिवांसो विद्वांसः! कल्याणिवनाट्यवेदाचार्यस्य पुत्रमभिनयदर्पणं माममिमतरूपकप्रयोगानुज्ञया परमनुगृह्णीत। (आकाशे कर्णं दत्वा) किं ब्रूथ ?

'यस्मिञ्जगन्मङ्गलमस्ति वस्तु यस्मै स्वयंभूः स्पृहयत्यजस्रम्।
तच्छ्रोत्रयोर्लोचनयोः पथां नः शृङ्गाटकं नाटकमाविरस्तु ॥६॥' इति।

(सहर्षम्) अस्मन्मनोरथसंवाद्येव परिषदादेशः। यत् प्रतापरुद्रचरितानुबन्धः प्रबन्धः सामाजिकानां मनसि वर्तते। अहो सर्वं सुघटितमनुविधात्रा विधात्रा! यतः

सभा स्वयंभूपरमेश्वरस्य प्रतापरुद्रस्य गुणा महार्घाः।
अहं च नाट्यश्रुतिपारदृश्वा सुधामुचस्तस्य कवेश्च वाचः ॥ ७ ॥

**एषा प्रशंसयाऽभिमुखीकरणरूपा भारतीवृत्तेरङ्गं प्ररोचना।**

(सविमर्शम्) कथमस्मत्प्रेयसी संगीतशारिका चिरयति ?

---

तस्मिन् क्रीडां स्वीकृतवान् विभुः॥ तमालोक्य महादेवी महेशेच्छानुवर्तिनी। करिणीरूपमास्थाय तेन सा विचचार ह॥' इत्यादिना। एकस्मिन्नर्धे नरस्येतरस्मिन् करिणश्चाकृतिर्यस्य सोऽयं नरनागाकृतिः। तथापि श्रीमान् रमणीयः। स देवो गणेशो वः सामाजिकानां श्रेयसेऽस्त्विति वाच्यार्थः। सूच्यार्थस्तु यस्य कथानायकस्य भूभृत्सुता राजपुत्री मुम्मडाम्बा महादेवस्तन्नामको महाराजः पितराविति विश्रुतौ। नरनागा नरश्रेष्ठाः। 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यभिधानात्। उपमितसमासः; तदाकृतिः नलनहुषदिलीपादिसदृश इत्यर्थः। स देवो राजा। 'देवः सुरे घने राज्ञि' इति विश्वः। अत्र द्वयोरप्यर्थयोर्वाच्यत्वाभावान्न श्लेषः। नापि शब्दशक्तिमूल उपमालंकारध्वनिः। संबन्धान्तरे संभवति सादृश्यमूलकत्वकल्पनानपेक्षणात्। किं तु सूचकत्वसंबन्धाच्छब्दशक्तिमूलो वस्तुध्वनिः। अत एवोक्तमलंकारसर्वस्वे श्लेषालंकारप्रस्तावे---'यत्र सूचनव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः' इति। 'ऋतुं कंचिदुपादाय' इतीममंशमुदाहरति—ऊर्ध्वमित्यादिना॥ विहरन्ती राज्ञश्चन्द्रस्य हंसानां च श्रीर्यत्र स तथोक्तः, अन्यत्र राजहंसाः राजश्रेष्ठास्तल्लक्ष्मीविहारभूमिरित्यर्थः। विलसत् प्रकाशमानं मित्रमण्डलं सूर्यमण्डलम्, अन्यत्र सुहृत्समूहो यत्र स तथोक्तः। प्रसन्नः एकत्र मेघापगमात्, अन्यत्र स्वभावाच्चेति भावः। सन्मार्गं नक्षत्रमार्गम्, अन्यत्र साधुमार्गम्। प्रसाधयति भूषयति। अत्र प्रस्तुतशरद्विशेषणसाम्येनाप्रस्तुतराजसूचनात् समासोक्तिः। अत

(प्रविश्य) नटी---(पुरोऽवलोक्य सस्पृहम्)---

*किं भारईए सुव्वइ मंजीररवो सहाए विहरंतीए ।
अह संगीअसुइ व्वा विण्णादं णट्टप्पमुहतूरणिणाओ ॥ ८ ॥

**एतत्साम्यादनेकार्थयोजनरूपं त्रिगतं प्रस्तावनाङ्गम् ।**

(उपसृत्य)—†अज्ज इअम्हि । आणवेदु को णिओओ अणुट्ठीअदु त्ति ।

**सूत्रधारः**—आर्ये,

यद् गेहे कलकण्ठनादमधुरं गास्यामि गीतिं ध्रुवां
लास्यं चारुभिरङ्गहारललितैराविष्करिष्यामि यत् ।
रम्यं यत् किल रङ्गमङ्गलविधिं संपादयिष्याम्यहं
प्रागित्युक्तवती तदद्य निपुणे निर्व्यूढमेवं त्वया ॥ ९ ॥

**एतत् प्रियसदृशैरप्रियैर्वाक्यैरुपालम्भनाच्छलम् ।**

**नटी**—(सभयम्)†† णट्टसामग्गिं सज्जीकादुं विलंबिअं । सज्जीकिआ क्खु एसा । केण उण रुव्वएण पओओ उअक्कमीअदु ।

**सूत्रधारः**—नन्विदमेव रूपयतु । (इति पत्रिकां ददाति ।)

---

* किं भारत्याः श्रूयते मञ्जीररवः सभायां विहरन्त्याः ।
अथ संगीतश्रुतिर्वा विज्ञातं नाट्यप्रमुखतूर्यनिनादः ॥

† आर्य इयमस्मि । आज्ञापयतु को नियोगोऽनुष्ठीयतामिति ।

†† नाट्यसामग्रीं सज्जीकर्तुं विलम्बितम् । सज्जीकृता खल्वेषा । केन पुना रूपकेण प्रयोग उपक्रम्यताम् ।

---

एवेदं गुणीभूतव्यङ्ग्यम्, न पुनः पूर्ववत् ध्वनिरिति बोद्धव्यम् । लक्ष्ये योजयति **काव्यार्थेति** ॥ अथ सामाजिकानुग्रहमाशास्ते---**सविनयमित्यादिना** ॥ भागधेयविवर्तस्य भाग्यपरिपाकस्य । कलार्णवो नाम नाट्यवेदाचार्यः । आकाशभाषितेन तदीयमुत्तरमाह---**आकाश इति** ॥ तल्लक्षणं तु 'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ॥' इति । **यस्मिन्निति** ॥ स्वयंभूरीश्वरो यस्मै वस्तुने अजस्रं स्पृहयति । 'स्पृहेरीप्सितः' इति संप्रदानत्वाच्चतुर्थी । जगन्मङ्गलं तद्वस्तु यस्मिन्नाटकेऽस्तीति योजना । वाचिकाभिनयेन श्रव्यत्वाद् इतराभिनयेन दृश्यत्वाच्चाह---**श्रोत्रयोरित्यादि** ॥ शृङ्गाटकं चतुष्पथम् । तन्नाट-

**नटी**—(गृहीत्वा संस्कृतमाश्रित्य वाचयति ।)

तेजःपर्यायहरयोः किं किं संबोधनं मतम ।
किमाशीर्वादविषयो विद्यानाथकृतिश्च का ॥ १० ॥

(समन्दस्मितं) †णिगूढत्थं खु एदं छेआणं वअणं पडिभादि । कीरिसं उत्तरं ? णिरूवेदु अज्जो ।

**सूत्रधारः**—अयि सुव्यक्तमेतत् । प्रतापरुद्रकल्याणमिति प्रतीयत एव

**एषा निगूढार्था नालिका ।**

**नटी**—*कहं कहाणाअणामहेआणुबंधमणोहरं क्खु णाडअम् । पआवोववदंकिअं तस्स रण्णो णाम कहं जाअं ति पुच्छीअदि ।

**सूत्रधारः**—प्रिये श्रूयताम् ।

तं सुजातं समुद्वीक्ष्य क्षोण्यां रविमिवोदितम् ।
प्रतापरुद्र इत्याख्यामकरोत् काकतीश्वरः ॥ ११ ॥

अन्यच्च—

विष्णोर्विश्वैकवीरस्य काकतीयकुले स्थितम् ।
अवतारममुं ज्ञात्वा वीररुद्रं प्रचक्षते ॥ १२ ॥

---

† निगूढार्थं खल्वेतच्छेकानां वचनं प्रतिभाति । कीदृशमुत्तरम् ? निरूपयत्वार्यः ।

* कथं कथानायकनामधेयानुबन्धमनोहरं खलु नाटकम् । प्रतापोपपदाङ्कितं तस्य राज्ञो नाम कथं जातमिति पृच्छ्यते ।

---

क्रमाविरस्तु । इतिशब्द उत्तरसमाप्तौ । संवादेन संतुष्यन् उत्तरार्धमुद्घाटयति---**सहर्षमित्यादि** ॥ अघटमानघटकं दैवानुकूल्यं जातमित्याह—**अहो इति** ॥ सभा गुणग्राहिणीति भावः । महार्घा महामूल्याः । नटानामाम्नायो नाट्यम् । 'छन्दोगौक्थिक— ' इति ञ्यप्रत्ययः । तस्य श्रुतिशब्देन चूतवृक्षादिवत् समानाधिकरणसमासः । तस्याः पारं दृष्टवान् नाट्यश्रुतिपारदृश्वा । 'दृशेःक्वनिप् ' । सुधामुचोऽमृतवर्षिण्यः । प्ररोचनामुदाहरणे योजयति—**प्रशंसयेति** ॥ प्रस्तुतार्थस्येति शेषः । **अभिमुखीकरणरूपेति** ॥ सामाजिकानामिति शेषः । 'प्रेक्षकाद्युन्मुखीकारः प्रस्तुतार्थप्रशंसया । प्ररोचना ' इति लक्षणात् । **किमिति** ॥ भारईए इत्यत्र एकारस्य 'एदोतोः क्वचित् स्वरूपेण ह्रस्वः' इति ह्रस्वः । एवमन्यत्रापि वृत्तानुसारेण द्रष्टव्यम् । लक्ष्ये लक्षणं योजयति---**एतदिति** ॥ प्रस्तावनाङ्गमित्यनेन पूर्वरङ्गाङ्गत्रिगतव्यवच्छेदः । सूत्रधारो बिलम्बवतीं

**नटी**—†लोआणं कण्णजुअलस्स भाअहेएण एदं णामजुअलं सुणीअदि। चिरस्स णट्टविज्जाणुवट्टणं फलिअं, जेण लोअमंगलं काकइणरिंदचरिअं अभिणिज्जइ।

**एतन्नाट्यप्रसङ्गेन प्रकृतकार्यावलगनादवलगितं द्वितीयम्।**

**सूत्रधारः**—अहो प्रज्ञासंवादोऽयमायुष्मत्याः, यदियं कवीनां प्रश्नोत्तरमालिका। यथा किल—

किं लोकश्रवसोर्भाग्यं मङ्गलश्रवणं मुहुः।
किं मङ्गलं प्रतापाङ्करुद्रस्य चरिताद्भुतम्॥ १३॥

**एतत्प्रश्नोत्तरमालारूपमुद्धात्यकम्।**

**नटी**—*अय्यपरिअणेण सव्वं संपद्दीअदि।

**सूत्रधारः**—आर्ये,

त्वया दारैरुदारश्रीर्नाट्यसंपदियं मम।
प्रबन्धलक्ष्मी रीत्येव विदर्भफणितिस्पृशा॥ १४॥

**एष मिथःस्तोत्ररूपः प्रपञ्चः।**

**नटी**—**एआरिसगुणमहग्घपआवरुद्दचरिअं अहिकरिअंतो तस्स कइणो संपुण्णो सरस्सईपसादो।

---

† लोकानां कर्णयुगलस्य भागधेयेन एतन्नामयुगलं श्रूयते। चिरस्य नाट्यविद्यानुवर्तनं फलितं, येन लोकमङ्गलं काकतिनरेन्द्रचरितमभिनीयते॥

* आर्यपरिजनेन सर्वं संपाद्यते।

** एतादृशगुणमहार्घप्रतापरुद्रचरितमधिकुर्वतः तस्य कवेः संपूर्णः सरस्वतीप्रसादः।

---

नटीमुपालभते—**यदिति**॥ ध्रुवालक्षणं वक्ष्यामः। माधुर्यं गायनीविशेषगुणः। तदुक्तं **शार्ङ्गदेवेन**—'रूपयौवनशालिन्यो गायन्यो गातृवन्मताः। माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः॥' इति। चारुभिः प्रियदर्शनैः अङ्गहारेषु ललितैः ललितादिसुकुमाराङ्गहारैरित्यर्थः। 'सप्तमी शौण्डैः' इति बहुवचनेनाद्यर्थलाभः। लास्यं मृदुनर्तनम्। 'लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धकम्' इति लक्षणात्। गास्यामीत्यादीनां स्थानिनोऽस्मदोऽहमिति विशेषणं ध्रुवागानादीनामविलम्बसूचनार्थम्। अत्र ध्रुवागानादिकं सर्वं निर्वहामीति प्रागुक्तवत्या भवत्या सर्वमेवं निर्व्यूढमिति विपरीतलक्षणया न

**सूत्रधारः**—आर्ये, एवमेव। नन्वेषा कविभारत्योर्वाकेलिः। यथा किल—

मातर्भारति! वत्स! किं? तव कृपां याचेऽद्य किं प्रस्तुतं?
जिह्वा काकतिवीररुद्रनृपतेः स्तोत्राय संनह्यति।
ज्ञातं ते विहरन्तु वाग्लहरयः संध्यानटद्धूर्जटि-
त्वङ्गन्मौलितरङ्गिणीकलकलारम्भप्रियंभावुकाः॥ १५॥

**एषाऽन्योन्यसंलापरूपा वाकेलिः।**

**नटी**—*अम्हाणं ईरिसणरिंदचरिआणुऊलो णट्टाडंबरो होइ ण वे त्ति सज्झसेण वेवइ मे हिअअम्।

**सूत्रधारः**—(किंचित् सासूयं) आः किमुच्यते! निरवद्या ननु मन्त्राव्यविद्यासामग्री। कीदृशी पुनस्तत्र गीतिर्योग्यतया भविष्यति?

**नटी**—†संगीदसारस्स महण्णवो उव्वेल्लिज्जदि। अवहाणजाणपत्तं आरूहदु अज्जो।

---

* अस्माकमीदृशनरेन्द्रचरितानुकूलो नाट्याडम्बरो भवति न वेति साध्वसेन वेपते मे हृदयम्।

† संगीतसारस्य महार्णव उद्वेल्यते। अवधानयानपात्रमारोहत्वार्यः।

---

निर्व्यूढमिति लभ्यते। अत्र नर्तनोपयोगिकरपादादिकमङ्गविशेषः, करणं तु तलपुष्पपुटादि। तदुक्तं संगीतरत्नाकरे—'स्यात् क्रिया करपादादेर्विलासेनात्रुटद्रसा। करणं नृत्तकरणं भीमवद्भीमसेनवत्॥' इति। तत्समुदायसाध्यो नर्तनप्रयोगविशेषः अङ्गानामुचितदेशप्रापणेन हरप्रियाङ्गप्रयोगत्वेन वाऽङ्गहारः इत्युच्यते। तदुक्तम्---'अङ्गानामुचिते देशे हरणं सविलासकम्। अनेककरणोत्पाद्यमङ्गहारोऽभिधीयते॥ यद्वा हारो हरस्यायं प्रयोगोऽङ्गैरिति स्मृतः।' इति। ललितादिलक्षणं बह्वपेक्षमिह विस्तरभयान्न लिख्यत इत्यन्यतो द्रष्टव्यम्। संस्कृतमाश्रित्येति॥ पत्रिकागतस्य स्वभाषितत्वाभावात्। वाचयति पठति। वचिरयं चौरादिकः। नालिकाख्यमङ्गं वक्तुं बहिर्लापां प्रहेलिकामाह----तेज इति॥ नालिकालक्षणे सोपहासविशेषणं कृताकृतमिति हृदयम्। अत एवोक्तम् एषा निगूढार्था नालिकेति॥ णिगूढत्थमिति॥ छेका विदग्धाः। कथं कथानायकनामधेयानुबन्धमनोहरं खलु नाटकम्। अत्र कथमित्याश्चर्ये। प्रतापोपपदाङ्कितं तस्य राज्ञो नाम कथं जातमिति पृच्छ्यते। अत्र कथंशब्दः कारणवाची। 'कारणेऽपि कथं तर्के विस्मये संपदुद्भवे'

एतदन्योन्यवाक्याधिक्यादधिबलम् ।

सूत्रधारः---चिरमवहित एवास्मि । नन्वियमुपक्रम्यते ध्रुवा—

नटकृतध्रुवागानप्रतिज्ञावचनं संभ्रमोदितमिति गण्डम् ।

नटी---(सस्मितं) *कहं अज्जो धुवं गाअइ !

सूत्रधारः—अयि कथमर्धोक्त एव त्वरा, 'नाट्यविद्या' इति शेषं न जिघ्रति ।

एतदुक्तस्यान्यथायोजनरूपमवस्यन्दितम् ।

आर्ये, नूनं ध्रुवागानोत्सुकं तव चेतः, तदारभ्यतां गीतिः ।

नटी—(तथा करोति ।)

**लच्छी सरई अ इमा धवलिअभुवणंतरा विराअंती ।
विलसंतकुवलअसिरी राअस्स पसाहणं कुणइ ॥ १६ ॥

---

* कथमार्यो ध्रुवां गायति !

** लक्ष्मीः सरसी चेयं धवलितभुवनान्तरा विराजन्ती ।
विलसत्कुवलयश्री राज्ञः प्रसाधनं कुरुते ॥

---

इति भावप्रकाशवचनात् । सूर्यसदृशत्वात् प्रतापरुद्र इति संज्ञा संजातेत्युत्तरमाह-तमिति ॥ वीरावतारत्वात् वीररुद्रसंज्ञाऽपि समभूदित्याह---विष्णोरिति ॥ लोकानां कर्णयुगलस्य भागधेयेनैतन्नामयुगलं श्रूयते । अथावलगितस्य द्वितीयं भेदमुदाहरति---चिरस्येति ॥ प्रकृतकार्यं नाटकप्रयोगरूपम् । अहो इति ॥ प्रतापोऽङ्कश्चिह्नं यस्य रुद्रस्य तथोक्तस्य । उद्घात्यकभेदोऽयमित्याह—एतदिति ॥ मिथः स्तोत्रमपि प्रपञ्चलक्षणं मत्वाऽऽह---अद्येत्यादिना ॥ त्वयेति ॥ दारैः कलत्रेण । 'भार्या जायाऽथ पुंभूम्नि दाराः' इत्यमरः । विदर्भकविप्रिया फणितिर्विदर्भफणितिः, तत्स्पृशा रीत्या वैदर्भ्या । कविभारत्योरुक्तिप्रत्युक्त्योस्त्रिरावृत्तिरूपां वाकेलिमाह---मातरिति ॥ अत्र मातृशब्देन कवेर्भारत्यां भक्तिविशेषः, वत्सशब्देन तस्यास्तस्मिन् वात्सल्यातिशयश्च सूच्यते । कविराह---तवेति । भारती प्रयोजनं पृच्छति---अद्येति ॥ कविस्तदाह---जिह्वेति ॥ भारती स्मरणमभिनीयेवाह---ज्ञातं ते इति ॥ प्रार्थनानिमित्तमिति शेषः । संध्यानटद्धूर्जटित्वङ्गन्मौलितरङ्गिणीकलकलारम्भस्य संध्याताण्डवप्रवृत्तखण्डपरशुदोधूयमानजटाजूटविजृम्भमाणजाह्नवीकल्लोलकोलाहलस्य प्रियाः भवन्तीति प्रियंभावुकाः । तत्कल्पा इत्यर्थः । 'कर्तरि भुवः' इति खुकञ्प्रत्यये मुमागमः । वाग्लहर्यो वाग्वैखर्यः । विहरन्तु प्रवर्तन्ताम् । यदि ज्ञातमित्येकं वाक्यं,

सूत्रधारः—(आकर्ण्य सरसावेशं)

गाढालिङ्गनसंमर्दप्रत्यक्षरगलत्सुधाम् ।
ध्रुवां करोमि सर्वाङ्गे श्रोत्रैकामृतवर्षिणीम् ॥ १७ ॥

एष रसवशादसंगतार्थव्याहाररूपोऽसत्प्रलापः ।

नटी—(सोपहासं) †सुउमारा क्खु एसा अय्यस्स णिद्दआलिंगणवेल्लणं ण सहइ ।

एष हास्यलोभकरो व्याहारः ।

सूत्रधारः—(सव्रीडं)

रसास्वादेन तरला ये माद्यन्ति विपश्चितः ।
त एव भावुका लोके भवन्ति हृदयालवः ॥ १८ ॥

एतद्दोषस्य गुणत्वारोपान्मृदवम् ।

नटी—**अय्यो अणंतरकरणिज्जं णिरूवेदु ।

---

† सुकुमारा खल्वेषाऽऽर्यस्य निर्दयालिङ्गनक्षेपणं न सहते ।
** आर्यः अनन्तरकरणीयं निरूपयतु ।

---

तदा 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति नियमात् वाक्यान्तरवर्तिपदस्य निमित्तत्वायोगात् पदात् परस्य युष्मदो विधीयमानः 'तेमयावेकवचनस्य' इति तयादेशो न स्यात् । सूत्रधारः स्वसामर्थ्यमाविष्कुर्वन्नाह---किंचिदित्यादि ॥ आः कोपे । ननुरवधारणे । योग्यतया सामर्थ्येन कन्या । नटी स्वसामर्थ्याधिक्यमाविष्करोति---संगीतेति ॥ संगीतसारस्य महार्णव उद्वेल्यते प्रवर्ध्यते । अवधानयानपात्रमारोहत्वार्यः—अवहितो भवेत्यर्थः । अत एवाधिबलमिदमित्याह—एतदिति ॥ चिरमित्यादि ॥ गण्डान्तं स्पष्टम् । सूत्रधारवाक्यं विडम्बयति—सस्मितमिति ॥ कथमार्यो ध्रुवां गायति । 'ध्रुवा नाट्यविधेति मे विवक्षितम् । तदर्थोक्त एव त्वमन्यथा मन्यसे' इत्याह—अयीति ॥ त्वरा कर्त्री । ध्रुवागानोत्सुकमिति ॥ अन्यथा तन्मयि नारोपयेरिति भावः । नटी राज्यलक्ष्मीं शरत्कालसरसीं च प्रस्तुत्य प्रवृत्तां ध्रुवां गायति—लच्छीति । इमा इयं लक्ष्मीः राज्यलक्ष्मीः शौक्ल्यनिमित्तत्वनिबन्धनेन यशसा धवलितानि भुवनान्तराणि लोकान्तराणि यस्याः सा तथोक्ता । विलसत्कुवलयश्रीः उल्लसदुर्वीमण्डलशोभा च राज्ञो नृपस्य प्रसाधनं करोति । अन्यत्र इयं सरसी धवलितं

**सूत्रधारः**—नन्वयमिदानीं सभापतिर्देवः स्वयंभूरुपश्लोक्यते ।

सर्वाङ्गविलसत्सर्वमङ्गलालंकृताकृतेः ।
रुद्रस्य महिमा भाति विश्वानुग्रहकारिणः ॥ १९ ॥

नेपथ्ये । भोः ! सत्यं सत्यम् । सर्वाङ्गविलसत्सर्वमङ्गलालंकृताकृतिरेवायं रुद्र इति ।

**सूत्रधारः**—(सहर्षं) कथमुपक्रान्तमेवास्मद्वाक्यानुगुण्येन प्रस्तुतस्यानुगुणं कुशलैः कुशीलवैः, यतः काकतीश्वरगुणवर्णनायोद्यतयोर्वैतालिकयोर्वचनमिवोपक्षिप्यते ।

**अयं कथोद्घातः । इदमेव गुणवर्णनात् प्रवर्तकं च ।**

(पुरोऽवलोक्य) कथमेतौ वैतालिकावित एवाभिवर्तेते ।

**एषोऽयमित्युपक्षेपात् प्रयोगातिशयः प्रस्तावनाङ्गम् ।**

तदेहि । आवामप्यनन्तरकरणीयाय सज्जीभवावः । (इति निष्क्रान्तौ ।)

**इति समग्राङ्गा प्रस्तावना ।**

---

कालुष्यापगमेन निर्मलीकृतं भुवनान्तरमुदकमध्यं यस्याः सा तथोक्ता । विकसत्कुवलयश्रीरुल्लसन्नीलोत्पलसंपत्तिश्च । राज्ञश्चन्द्रस्य प्रसाधनं करोति । रूपकेषु तावन्मार्गाभिनयेन प्रावेशिकीप्रभृतयः पञ्च ध्रुवाः प्रयोक्तव्याः । तदुक्तम्---'ध्रुवाः पञ्च प्रयोक्तव्या रसाभिनयसिद्धये ' इति । तत्रेयमान्तरा नाम ध्रुवा । तल्लक्षणं तु **भावप्रकाशे**—'सर्वासामान्तरा वस्तुरसादिवशकल्पिता । आन्तरा सा ध्रुवा ज्ञेया नाट्याभिनयरञ्जिनी ॥ ' इति । विशेषान्तराणि तत्रैव द्रष्टव्यानि । विस्तरभयादिह न लिख्यन्ते । रसप्रयुक्तं प्रलापमुदाहरति---**गाढेति** ॥ पूर्वं श्रोत्रयोरेकं मुख्यममृतं वर्षति ताच्छील्येन तां तथोक्ताम् । संप्रति गाढालिङ्गनसंमर्देन प्रत्यक्षरं द्राक्षासदृक्षादशेषादपि वर्णात् गलत्सुधां सतीं ध्रुवां सर्वाङ्गे करोमि । सूत्रिणोऽसत्प्रलापमुद्घाटयितुमाह---**सोपहासमिति** ॥ सुकुमारा खल्वेषाऽऽर्यस्य कर्तुर्निर्दयालिङ्गनस्य वेल्लणं क्षेपणं प्रेरणं, प्रयोगमिति यावत् । न सहते । 'क्षिप प्रेरणे' इत्यस्य धातोः 'क्षिपेर्वेल्ल' इत्यादिना वेल्लादेशः । दोषं गुणीकरोति---**रसेति** ॥ तरला रसलोला ये विपश्चितो विदग्धा रसास्वादेन माद्यन्ति परवशा भवन्ति , त एव लोके भावुकाश्चर्वणनिपुणाः सन्तो हृदयालवः सहृदया भवन्ति । 'हृदयादालुजन्यतरस्याम् ' इत्यालुच्प्रत्ययः ।

(ततः प्रविशतः काम्पिल्यकल्हतकौ वैतालिकौ ।)

**प्रथमः**—(सहर्षं)

योऽयं जातस्त्रिलोकीप्रथितसुचरिते काकतीयान्ववाये
यस्मै श्रेयांस्यजस्रं वितरति भगवान् देवदेवः स्वयंभूः ।
यस्याज्ञा सर्वपृथ्वीपतिमणिमुकुटश्रेणिकेलीवयस्या
सोऽयं भूपालमौलिर्जयति गुणमहान् रुद्रदेवो नरेन्द्रः ॥ २० ॥

**स्वयंभूदेवश्रेयोवितरणरूपबीजन्यासादुपक्षेपोऽङ्गम् ।**

**द्वितीयः**—सखे ! किमुच्यते,

यो रुद्रो रजताचले स्थितिमगादर्धाङ्गनारिः पुरा
सोऽयं संप्रति काकतीश्वरकुले सर्वाङ्गनारी स्थितः ।
स्थाने यद्विषमावलोकनकलामात्रेण भस्मीकृता-
न्यासन् वैरिपुराणि चित्रमधुना खड्गे विषं धार्यते ॥ २१ ॥

**प्रथमः**—सखे साधु समर्थितम् । अन्यथा कथमस्मै महाराजाय स्वप्ने कुलगुरुसदृशः स्वयंभूदेवस्तादृशीं श्रेयःसंग्रहकारिकामुपदिष्टवान् ।

---

'येषां काव्यानुशीलनाभ्यासवशात् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभव-
नयोग्यता, त एव हृदयसंवादभाजः सहृदयाः' इति **अभिनवगुप्ताचार्याः ।**
आर्योऽनन्तरकरणीयं निरूपयतु । सूत्रधारोऽनन्तरकर्तव्यं प्रतिज्ञापूर्वकमाचरति—
**नन्वित्यादिना ॥** अत्र सर्वाङ्गे विलसन्त्या सर्वमङ्गलया पार्वत्या अलंकृताकृतेरर्धाङ्ग-
जानेरित्यर्थः । सर्वाङ्गव्यापिसमस्तमङ्गलालङ्कृतत्वलक्षणस्य वीररुद्रविषयार्थान्तरस्यागुणं
सूत्रधारवाक्यमवलम्ब्य वचनमुपक्षिप्यते—**नेपथ्य इति ॥** उक्तमर्थमुद्घाटयति—
**कथमिति ॥** कुशीलवा नटविशेषाः, 'भूमिकाभिरनेकाभिः कर्मवागङ्गचेष्टितैः ।
यथाप्रकृतिसंधानकुशलास्ते कुशीलवाः ॥' इति लक्षणात् । अत एवायं कथोद्घातभेद
इत्याह—**अयमिति ॥** एतच्छब्दोपक्षेपेण प्रयोगातिशयमुदाहरति—**कथमेताविति ॥**
वैतालिकलक्षणं तु **भावप्रकाशे** 'तत्तत्प्रहरकयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः ।
सरभसमेव विताळं गायन् वैतालिको भवति ॥' इति । इति प्रस्तावना ।
'कथादौ विष्कम्भं कुर्यात्' इति मतमवलम्ब्य प्रस्तावना । अनन्तरं वृत्तस्य
वर्तिष्यमाणस्य च वीररुद्रचरितस्य निदर्शकं मध्यपात्रद्वयप्रयोजितं शुद्धविष्कम्भ-
मुदाहरति—**ततः प्रविशत इत्यादिना ॥** इतः परं स्वप्नोपदेशपर्यन्तो वृत्तकथा-
भागः । तत्रोपक्षेपमुदाहरति—**योऽयमिति ॥** मणिमुकुटश्रेण्याः केलीवयस्या क्रीडा-
सखी । सर्वैरपि भूपालैरस्याज्ञा शिरसा धार्यत इति भावः । योऽयमित्यत्रेदंशब्दः

स्वयंभूदेवप्रसादरूपस्य बीजस्य बहूकरणात् परिकरः ।

द्वितीयः—(सविमर्शाश्चर्यं) कथमवगतं राजरहस्यं वयस्येन ?

प्रथमः—सखे, कस्य वा न विदितमिदम् । यत् सर्वस्मिन्नपि निजनगरे महोत्सवमादिशता रुद्रनरेश्वरेण कुलदेवतायाः स्वप्नोपदिष्टाः प्रसादविशेषाः प्रख्याप्यन्त एव ।

कुलदेवताप्रसादरूपस्य बीजस्य प्रख्यापनेन परिनिष्पत्तेः परिन्यासः ।

द्वितीयः—अहो निरन्तरप्रसादोन्मुखता देवस्य । यथा काकतीयप्रसवेषु श्रेयांस्युत्तरोत्तरमनुबध्यन्ते ।

एतत् बीजस्य श्रेयोऽनुबन्धरूपगुणख्यापनाद् विलोभनम् ।

तदस्मिन्नेव महीयसि महे महीमण्डलाखण्डलं चलमर्तिगण्डमुपश्लोकयितुमावयोरयमेवावसरः । तदेहि राजकुलं प्रविशावः ।

---

प्रसिद्धिमात्रपरो न तु यच्छब्दापेक्षितार्थबोधकः, अन्यथोत्तरवाक्ये तच्छब्दप्रयोगानुपपत्तेः । 'यतोऽनुवादवाक्यगतयच्छब्दसंनिहितानां तदेतदिदमदसां प्रसिद्धिपरत्वम्, एवं विधेयवाक्यगततच्छब्दसन्निहितानामेतदिदमदसामपि । तथैव लोकवेदयोः प्रयोगदर्शनात्' इत्यादि बहुधा प्रपञ्चितम् अस्मन्महोपाध्यायमल्लिनाथसूरिणा एकावलीतरले । अतः सोऽयमित्यत्राप्येवमेव द्रष्टव्यम् । पुरा किल काकतिकुलसंभूते गणपतिनाम्नि महाराजे दुहितृमात्रसंताने कदाचित् दैवयोगेन कालपरिपाकमुपेयुषि तन्महिषी रुद्रदेवी नाम राज्ञी बहूनि वर्षाणि तद्राज्यमकण्टकं परिपाल्य परिणता सती दौहित्रे प्रतापरुद्रे राज्यधुरां निदधे । तामिमां कथां मनसि निधायाह—यो रुद्र इति ॥ अर्धाङ्गं नारी यस्यासावर्धाङ्गनारिः । समासान्तविधेरनित्यत्वज्ञापनात् 'नद्यृतश्च' इति कबभावपक्षे 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । सर्वाङ्गेण नारी सर्वाङ्गनारी रुद्रदेवीरूपेण स्थित इत्यर्थः । तत्पुरुषत्वात् परवल्लिङ्गता । अथवाऽत्रापि बहुव्रीहिः । प्रक्रियापि पूर्ववदेव । अवतारभेदादाकारभेदेऽपि तस्मिन् रुद्रे पौरुषभेदाभावो नाश्चर्यावह इत्याह—स्थाने इति । यत् यतः विषमावलोकनं तृतीयदृष्टिः, अन्यत्र क्रोधदृष्टिः, तस्य कलामात्रेणांशमात्रेण वैरिपुराण्यसुरनगराणि 'स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत' इति श्रुतेरिति भावः । अन्यत्र शत्रुनगराणि । स्थाने युक्तमित्यर्थेऽव्ययम् । कैलासवासिनो रुद्रस्य कण्ठे विषं, काकतिकुलवासिनस्तु स्त्रीरूपस्य खड्गे विषमिति महदेतदद्भुतमित्याह—चित्रमिति ॥ 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इति भावः । अथ वर्तिष्यमाणकथाभागे परिकरमुदाहरति—

**प्रथमः**—वयस्य, सांप्रतं पुरोधःप्रमुखानमात्यवृद्धानपि पुरस्कृत्य कल्याणस्वप्नक्रमं मीमांसमानो नृपतिरभ्यन्तरास्थानीमधितिष्ठति। तदावामपि तावदितो गत्वा यथावसरं प्रतीक्षावहे।

(इति परिक्रम्य निष्क्रान्तौ।)

अयं शुद्धविष्कम्भः

अङ्कारम्भः ॥

(ततः प्रविशति यथानिर्दिष्टवेषो राजा चामरग्राहिणी च।)

**राजा**—(सहर्षातिशयं) अहो प्रसादातिशयः परमेश्वरस्य!

सोमार्काभिजनं तमद्य जयति श्रीकाकतीयान्वयः
पातिव्रत्यमुपैति सांप्रतममीष्वस्मासु विश्वंभरा।
अस्माभिर्निजदोःप्रसूतिमधुना धन्यामजो मन्यते
यत्कर्तव्यमुपादिशत् कुलपतिर्देवः स्वयंभूः स्वयम् ॥ २२ ॥

**पुरोधसः**—महाराज, भवादृशा एव परमर्हन्ति तादृशमहिम्नो देवस्य हितोपदेशान्। अथवा किमत्राभिनवम्। पुत्राणां हितोपदेशाधिकारः पितुरेव। यदित्थं कथयन्ति तद्विदः।

सैवोमा चेति निर्दिष्टा सोमा चेति प्रथामगात्।
तव माता शिवा साक्षाद्देवो गणपतिः पिता ॥ २३ ॥

---

**सख इत्यादिना** ॥ संग्रहकारिकां संग्रहश्लोकम्। रुद्रनरेश्वरेण रुद्रदेव्या। स्त्रीव्यक्तावपि पुंस्त्वेन निर्देशे स्वयमेवोपपत्तिं वक्ष्यति। काकतीयप्रसवेषु काकतीयसंतानेषु। अनुबध्यन्ते अविच्छेदेन संबध्यन्ते। महीयसि महे महोत्सवे। उद्दण्डपुरुषखण्डको वीरप्रकाण्डकश्चलमर्तिगण्ड इति बिरुदशब्देनोच्यते। **वयस्येति** ॥ मीमांसमानो विचारयन्। इति शुद्धविष्कम्भः। अङ्कमारभते—**तत इति** ॥ हर्षानुभावं प्रियभाषणमाह—**सोमेति** ॥ अभिजनो वंशः। तं प्रसिद्धम् अमीष्वेवमनुग्रहपात्रेष्विति भावः। अजो ब्रह्मा। निजदोःप्रसूतिं क्षत्रजातिम्, 'राजन्यो मनुष्याणाम्' इति तस्या बाहुजत्वश्रवणात्। कुत इत्यत आह—**यदिति** ॥ रुद्राम्बायाः पितरौ सोमाम्बागणपतिदेवौ, तयोरुमामहेश्वरात्मकत्वं लोकविदितम्। ततः स्वयंभूमहाराजयोः पितापुत्रभावोऽस्ति।

**मन्त्रिणः**—एवमेवैतत् । अन्यथा कथमीश्वरप्रसादादृते निरङ्कुशं स्त्रीव्यक्तिविशेषस्य लोकाधिपत्यम् । एवं मानुषशंभुना गणपतिमहाराजेनाभ्यन्तरस्यानुभवमहिम्नः सदृशमत्र पुत्र इति व्यवहारः कृतः । तदनुगुणा च रुद्र इत्याख्या ।

**पुरोधसः**—(सकौतुकं) कीदृशी देवस्य स्वप्नोपदेशपरिपाटी ?

**राजा**—(सादरं) इदं निवेद्यते ।

कदाचित् कल्याणे रजनिसमये स्मेरवदनं
पुरः प्रादुर्भूतं सयुवतिवपुः साक्षनिटिलम् ।
स्रवन्तीचन्द्राभ्यां महितमुकुटं प्रेक्ष्य किमपि
स्वयंभूदेवोऽसावयमिति हठोत्थानमभजम् ॥ २४ ॥

अनन्तरं स्वप्न एव

वपुषा तं नमस्कृत्य स्तुवन् सूनृतया गिरा ।
स्वामिने काकतीयानां रत्नासनमुपाहरम् ॥ २५ ॥

**चामरग्राहिणी**—*अहो देवस्स अणुसंधाणं जं सिविणे वि कुलसामिणो समाराहणम् ।

---

* अहो देवस्यानुसंधानं यत् स्वप्नेऽपि कुलस्वामिनः समाराधनम् ।

---

अतो हितोपदेशो युज्यत एवेत्याह—**अथवेत्यादिना** ॥ **सैवेति** ॥ सैव तव माता उमा चेति निर्दिष्टा सती लोकैरिति शेषः । सोमा चेति प्रथां प्रसिद्धिमगात् । परस्परसमुच्चयार्थौ चकारौ । पिता गणपतिस्तु साक्षात् प्रमथाधिपः शिवो देव इति तत्पित्रोः शिवयोश्च तादात्म्यमिति भावः । अथामुष्या भविष्यति निरङ्कुशः प्रभाव इति विभाव्य महाराजो दुहितरं पुत्र इति व्यवहृतवानित्याह—**एवमिति** ॥ आभ्यन्तरस्यानुभवमहिम्नः दुहितृभाविमाहात्म्यगोचराया अन्तःकरणवृत्तेरित्यर्थः । अत एवाऽऽह तत्रभवान् कविकुलशिरोमणिः **कालिदासः**—'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।' इति । अत्र दुहितरि । तदनुगुणा व्यवहारानुगुणा, रुद्र इति पुंस्त्वेन समाख्येत्यर्थः । प्राचामियं शैली—यदयं लिङ्गव्यत्यासेन निर्देश इति । यथा स्त्रीव्यक्तौ शिखण्डीति पुंस्त्वेन व्यवहारः । यथा चेन्द्रं पुमांसमपि श्रुतिरेव 'सुब्रह्मण्या' इति स्त्रीत्वेन निर्दिशति । तथा च **षड्विंशब्राह्मणम्**—'सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमिति

**पुरोधसः**—किमुच्यते। आविष्टभक्तयः खलु स्वयंभूदेवे काकतीयनरदेवाः। ततः।

**राजा**—

शय्याशिरःस्थानकृतस्य पूर्णकुम्भस्य तोयैः परिकल्प्य पाद्यम्।
अतीन्दुसारैर्मणिभिः किलाहमपूजयं दैवतमस्मदीयम्॥ २६॥

अथ च

विभुः स्वयंभूरवदच्छुचिस्मितां गिरं स्ववामार्धवधूपलालिताम्।
स्पृशन् करेणाभयदानशालिना कृताञ्जलिं मां विनयानताननम्॥ २७॥

यत् किल

उन्मत्तकैर्मध्यमलोकभाग्यैस्तपोविशेषैरनवैः पृथिव्याः।
सम्यक्फलैः सच्चरितैः प्रजानां प्रतापरुद्रोऽयमिहावतीर्णः॥ २८॥

वत्स काकतीयकुलप्रदीप!

स्वीकृते पुत्रभावेन दौहित्रे प्राङ्ममाज्ञया।
अस्मिन् निधेहि धौरेये गुर्वीमुर्वीधुरामिति॥ २९॥

---

स्त्रियमिव त्रिराह' इति। एवमुत्तरत्रापि द्रष्टव्यम्। स्वप्नोपदेशक्रममादरवशात् प्रतिज्ञापूर्वकं निवेदयति—**इदमिति**॥ **कदाचिदिति**॥ कल्याणे शुभग्रहयोगादिना मङ्गले, रजनिसमये गोविसर्गादौ स्मेरवदनं प्रसादोन्मुखत्वात् सयुवतिवपुरर्धाङ्गजानिरित्यर्थः। साक्षनिटिलं फाललोचनसहितमित्यर्थः। उभयत्र बहुव्रीहिगर्भो बहुव्रीहिः। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षजन्तः साक्षशब्दः। स्रवन्ती मन्दाकिनी। किमपि वक्तुमशक्यं वस्तु प्रेक्ष्य। हठशब्देन चिरन्तनतटाकोदकाच्छादितहरितद्रव्यमुच्यते। 'तदुत्सार्यमागमपि स्वच्छन्दतो मुहुरुदकमाच्छादयतीति स्वच्छन्दव्यवहारो लक्ष्यते' इत्युक्तम् **आचार्यैरुद्भिदधिकरणे**। एवमत्र संभ्रमेणाप्याच्छादनसंभवात् संभ्रमो लक्ष्यत इति वदामः। तेन हठोत्थानं संभ्रमोत्थानमिति वेदितव्यम्। स्वप्ने देवतादिदर्शने फलं **दैवज्ञवल्लभे**—'सुगन्धपुष्पाक्षतपूर्णकुम्भशक्रध्वजच्छत्रमहीरतीनाम्। उद्यद्दिनेशेन्दुसुहृत्सुराणां सितद्विजादर्शसुवासिनीनाम्॥ सुवर्णधान्याब्जफलेभ्रहीणां भक्ष्यान्नरत्नाम्बरवाहनानाम्। संदर्शनं श्रेष्ठमुशन्ति सन्तः स्वप्ने मृतानां च सुचेष्टितानाम्॥' इति। अभजमित्यनद्यतने लङ्। तेन चतुर्थयामादर्वाचीनः स्वप्न इति सूच्यते। तत्फलस्य राज्यलक्ष्मीप्राप्तिरूपस्य विजययात्रया द्वित्रमासविलम्बसंभवात्। तदुक्तं **बृहस्पतिमते**

**पुरोधसः**—(सप्रमोदं) महाराज, काकतीयकुलयोगक्षेमविधानदक्षिणेन दाक्षायणीपतिना साक्षादेवमादिष्टम् । तवाप्ययमेव मनोरथः । प्रियंकरश्चायं महोत्सवः प्रजानाम् । तदारोहतु प्रागतिसृष्टयौवराज्यस्य प्रतापरुद्रस्य भुजशिखरं सागरमेखला । ततस्ततः ।

**इयं प्रयोजननिर्धारणरूपा युक्तिः ।**

**राजा**—तद्वचनमाकर्णयन्ती निर्भरहर्षविकस्वरलोचना मेदिन्यपि देवस्य पार्श्वे दृष्टा ।

**चामरग्राहिणी**—*महाराअस्स हिअअं अणुवट्टमाणाए वसुंधराए उइदो क्खु हरिसाविब्भावो ।

**एषा स्वयंभूदेवस्य वचनाकर्णनेन मेदिन्याः सुखागमेन प्राप्तिः ।**

**राजा**—काकतीयकुलश्रेयसां देव एव प्रमाणमिति तस्याज्ञा मया शिरसि धृता । देवोऽपि सप्रसादातिशयमवलोक्यान्तर्हितोऽभूत् ।

**इदं मेदिनीप्राप्तिहेतोर्बीजस्य स्वयंभूदेवोपदेशस्याङ्गीकरणात् समाधानम् ।**

**मन्त्रिणः**—विश्वप्रियंकरः स्वप्नप्रत्ययः । किंतु काकतीयनरेन्द्रवृद्धोचितमाचारमनुवर्तमानस्य देवस्य नगरनिवासवैमुख्यं तथा कुलधुरंधरस्य

---

* महाराजस्य हृदयमनुवर्तमानाया वसुंधराया उचितः खलु हर्षाविर्भावः ।

---

स्वप्नाध्याये—'स्वप्नस्तु प्रथमे यामे वत्सरेण विपच्यते । द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥ अरुणोदयवेलायां दशाहेन फलं भवेत् । गोविसर्जनवेलायां सद्यः स्वप्नफलं भवेत् ॥' इति । वपुषा नमस्कृत्य साष्टाङ्गं प्रणम्येत्यर्थः । 'सत्यं प्रियं च वचनं यत्तत् सूनृतमुच्यते ।' नृतेर्मूलविभुजादित्वात् कप्रत्ययः । 'अन्येषामपि—' इति सोर्दीर्घः । आविष्टं भक्तिर्येषामिति लिङ्गसामान्ये नपुंसकपूर्वपदो बहुव्रीहिः, स्त्रीपूर्वपदत्वे भक्तिशब्दस्य प्रियादिपाठात् 'अप्रियादिषु' इति निषेधेन 'स्त्रियाः पुंवद्—' इत्यादिना पुंवद्भावप्रतिषेधप्रसङ्गात् । अत एवाह **वृत्तिकारः**—'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदत्वस्याविवक्षितत्वात् समाधेयम्' इति । **भोजराजस्तु** 'कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठो न भावसाधनस्य । दृढभक्तिरित्यादौ तु भावसाधनत्वान्न कश्चिद्विरोधः' इत्याह । प्रपञ्चितं चैतत् **तातपादैः संजीवन्यादौ** तत्र तत्रेत्यस्माभिरुपरम्यते ।

वीररुद्रस्य विश्वरक्षाक्षमे बाहुपरिघे राज्यधुराविश्रान्तिरिति च विषादहर्षयोः सीमानं स्पृशत्यस्माकं मनः ।

**एतत्सुखदुःखहेतुभूतं विधानम् ।**

**चामरग्राहिणी**—*अच्चरिअं अच्चरिअं । कुलामच्चमुहेणेव्व पव्वईवल्लहेण एव्वमुवदिट्ठम् ।

**इयं बीजविषयाऽऽश्चर्यरूपा परिभावना ।**

**राजा**—(सहर्षातिशयम्, अमात्यान् प्रति) अयं काकतीयकुलश्रेयः-कल्पलताप्ररोहः स्वयंभूदेवानुग्रहः सर्वेषामपि श्रवणमहोत्सवः क्रियताम् ।

**एष वीजप्रकाशनादुद्भेदः ।**

**मन्त्रिणः**— यदाज्ञापयति काकतीयपरमेश्वरः ।

**राजा**— किमिदानीं कर्तव्यम् ?

**पुरोधसः**—महाराज ! किमन्यत् ? सज्जीक्रियतां प्रतापरुद्रदेवस्य राज्याभिषेकसंभारः ।

**एष बीजानुगुणप्रोत्साहनरूपो भेदः ।**

---

* आश्चर्यमाश्चर्यम् । कुलामात्यमुखेनेव पार्वतीवल्लभेनैवमुपदिष्टम् ।

---

तस्मादत्रापि स्त्रीपूर्वपदो वा बहुव्रीहिरनुसंधेयः । शय्याशिरःस्थाने पूर्णकुम्भ-स्थापनं मङ्गलार्थम् । तदुक्तं **स्मृतिरत्नावल्याम्**—'माङ्गल्यं पूर्णकुम्भं तु शिरः-स्थाने निधाय च । वैदिकैर्गारुडैर्मन्त्रैः रक्षां कृत्वा स्वपेन्निशि ॥' इति । अतीन्दुसौररत्युज्ज्वलैः । स्वप्ने देवतार्चने 'सुरपूजोत्सवसेवा नैवेद्यं नृत्तगीतवाद्यं च' इत्यादिना **दैवज्ञवल्लभोक्तं** महाफलं द्रष्टव्यम् । मणिपूजाफलं च **पुष्पसार-सुधानिधौ**—'सुवर्णकुसुमैर्दिव्यैर्मणिविद्रुमविस्तृतैः । राजतैः रत्नसंभूतैरथवा चित्रवस्त्रकैः ॥ येऽर्चयन्ति हरं भक्त्या नरास्ते स्युर्महेश्वराः ।' इति । पूजानन्तरं वृत्तमाह—**विभुरिति** ॥ स्ववामार्धवधूपलालितां पार्वत्याऽनुमोदिताम् । अभयदा-नशालिना प्रसादसूचकेनेत्यर्थः । उन्मस्तकैः उल्लङ्घितशिरस्कैः, अतिप्रभूतैरित्यर्थः । मध्यमलोकस्य भाग्यैरदृष्टपरिपाकैः । तपोविशेषैः कृच्छ्रचान्द्रायणादिभिः । सच्चरितैः स्वस्ववर्णाश्रमोचितव्यापारैः । अत्र भाग्यादिनिमित्तभेदात् विच्छित्तिविशेषं वक्तुं मध्यमलोक एव समष्टिव्यष्टिभ्यामाश्रितः । प्रजापृथिवीव्यतिरिक्तमध्यमलोकासम्भ-

**मन्त्रिणः**—दिग्विजययात्रावशीकृतानां सर्वपार्थिवानां वर्गेणानीतैः सकलतीर्थसलिलैः प्रकाशितं स्वयंभूदेवप्रसादं महाभिषेकमनुभवतु राजपुत्रः।

**पुरोधसः**—उचितमनुमन्त्रितं मन्त्रिभिः।

**राजा**—तर्हि जैत्रयात्रासाधनानि सज्जीक्रियन्तां षड्विधानि बलानि। अहमपि सज्जो भवामि।

**एष आरम्भः। इदं बीजानुगुणारम्भरूपं करणम्। एवमारम्भ-बीजसम्बन्धरूपः साङ्गो मुखसन्धिः।**

(नेपथ्ये) **वैतालिकौ**—सुखाय माध्यन्दिनी संध्या भवतु देवस्य। यदिदानीम्—

लोकालोकगिरीन्द्रकन्दरतमःसंदोहदर्पापहं
त्वत्तेजःपटलं कियन्ति भुवनान्याक्रम्य संक्रीडते।
इत्यालोकनकौतुकीव शिथिलस्वीयाधिकारश्रमो
भास्वानेष समग्रदीप्तिरधुना व्योमाग्रमारोहति॥ ३०॥

अपि च—

उद्गायन्ति शरन्निशाकरकरस्तोमत्विषस्त्वद्गुणान्
क्रीडन्त्यो मलयाद्रिचन्दनलताकुञ्जे भुजङ्गाङ्गनाः।
पीत्वा तत्तदुदीर्णवर्णगलितां प्रत्यग्रधारां सुधां
वाताहारतया प्रभूतमयशः प्रक्षालयन्त्यो निजम्॥ ३१॥

---

वादिति द्रष्टव्यम्। एवं च अस्मिन् राज्यं शासति सस्याकरादिसम्पत्तिः प्रजासमृद्धिश्च प्रभवतीति फलितम्। **वत्सेति**॥ रुद्राम्बायाः पुंस्त्वेन संबोधनम्। प्राक् जन्मकाले। धुरं वहतीति धौरेयो धुरन्धरः। 'धुरो यड्ढकौ' इति ढक्। 'ऋक्पूः—' इत्यादिना समासान्तोऽप्रत्ययः, ततः टाप्। **सप्रमोदमिति**॥ अस्मिन्नर्थे विप्रतिपत्तेरभावादिति भावः। तदुक्तं **बृहस्पतिमते**—'देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा। यद्वदन्ति नरं स्वप्ने तत्तथैव विनिर्दिशेत्॥' इति। प्रियं करोतीति प्रियंकरः। 'क्षेमप्रियमद्रेऽण् च' इति खच्प्रत्ययः। अतिसृष्टं दत्तम्। स्वप्नशेषमाह—**तद्वचनमिति**॥ स्वप्ननिवेदनं निगमयति—**काकतीयेति**॥

इदानीं खलु—

आघ्राय किरणान् भानोर्यजुरामोदमेदुरान् ।
यतन्ते कृतिनः सर्वे कर्तुं माध्याह्निकीं क्रियाम् ॥ ३२ ॥

राजा---(आकर्ण्य, सर्वान् प्रति) साधयत यूयमभिमताचरणाय। अहमपि तावदभ्यन्तरं प्रविशामि ।

(इति यथोचितमुत्थाय परिक्रम्य निष्क्रान्ताः सर्वे)

**इति नाटकप्रकरणे कल्याणस्वप्नो नाम प्रथमोऽङ्कः ॥**

**(अथ द्वितीयोऽङ्कः)**

(नेपथ्ये)---*इदो इदो अज्जो ।

(ततः प्रविशति वृद्धकञ्चुकी)

**कञ्चुकी**—(सहर्षं) चिराय यौवनमतिशयानया चरितार्थया जरयाऽनया संचरे। यया दीर्घायुषा प्रतापरुद्रमहाभिषेकमनुभवितास्मि ।

**एष मध्याह्नवर्णनया विच्छिन्नस्य प्रकृतार्थस्य पुनरवमर्शाद्बिन्दुः ।**

---

* इत इत आर्यः ।

---

**विश्वेति ॥** प्रियंकरादिशब्दा अनुपदमेवोक्ताः । धुरंधरशब्दस्तु नायकप्रकरणे । **अयं काकतीयेत्यादि ॥** स्पष्टम्। षड्विधानि मौलादिरूपाणि बलानि; 'मौलं भृतं सुहृच्छ्रेणी द्विषदाटविकं बलम्' इति **अमरकोशा**भिधानात्। अत्र विष्कम्भादौ वैतालिकवाक्योपक्षिप्तस्याङ्गवशादनुवर्तमानस्य बीजस्य नायकव्यापारस्य स्वरूपात् किंचिदुच्छूनत्वलक्षणारम्भसंबन्धान्मुखसंधिरित्याह **एव**मिति। मध्याह्नवर्णनमारभते—**सुखाये**ति। लोके यत् किञ्चन विप्रकृष्टं वस्तु दिदृक्षवो वृक्षाग्रमद्रिशृङ्गं वा आरोहन्ति; तत्समाधिमावर्तनविकर्तनस्याह—**लोकालोकेति ॥** संक्रीडते—'क्रीडोऽनुसंपरिभ्यश्च' इत्यात्मनेपदम् । स्वीयाधिकारस्तमोऽपहत्वलक्षणस्तन्निमित्तः श्रमः शिथिलो यस्य स तथोक्तः। एतच्च राजतेजस एव तद्धारोद्वहनादिति वेदितव्यम्। अत एवालोकनकौतुकीवेत्युत्प्रेक्ष्यते। तत्र निमित्तमुपादत्ते—**अधुनेति ॥ उद्गायन्तीति ॥** मलयाद्रिचन्दनलताकुञ्जे दिवा विहारदेशे इत्यर्थः। तदुक्तं **भावप्रकाशे**—'सरितः पुलिनं वेला कान्तारारामभूधराः। लतागृहाणि चित्राणि शय्या

अपि च—

पदे पदे स्खलन्तं मां वाचा गत्याऽथ चेष्टया ।
अवलोक्य हसन्नास्ते स्वामी रुद्रनरेश्वरः ॥ १ ॥

(सविमर्शाश्चर्यम्)

काकतीयनरेन्द्रस्य राज्यश्रीर्मूलवेश्मनः ।
युवराजगृहानद्य गवाक्षैः स्वैरमीक्षते ॥ २ ॥

**एष राज्यलक्ष्म्याः प्रतापरुद्रगताभिलाषाद्विलासः ।**

(पुरोऽवलोक्य)

कथमयं राजपुत्रपरिचारको दारकः ससंभ्रमं मामभिवर्तते ।

(प्रविश्य) **दारकः**---*अय्य पणमामि ।

**कञ्चुकी**---भद्र कल्याणास्पदं भूयाः। किमनुमतं राजपुत्रस्य दिग्विजय-प्रस्थानं रुद्रनरेश्वरेण ।

**दारकः**—†कहं कहं वि अणुमदम् ।

**कञ्चुकी**—स्वनामानुगुणमिदं राजपुत्रस्य यत् सज्जीकृतसाधनं महाराजं सपादोपग्रहं निवार्य स्वयमेव जैत्रयात्रायामुत्तिष्ठते ।

**दारकः**—†† अय्य अणणुहूदजुज्झपरिस्समो जुवराओ । दुक्खरो खु दिअंतजओ कहं भविस्सइ ।

---

* आर्य प्रणमामि ।

† कथं कथमपि अनुमतम् ।

†† आर्य, अननुभूतयुद्धपरिश्रमो युवराजः । दुष्करः खलु दिगन्तजयः कथं भविष्यति ।

---

किसलयाञ्चिता । दिवा विहारदेशाः स्युः . . . ।' इति । क्रीडन्त्यः, निजरमणैरिति शेषः । तत्तदिति वीप्सायां द्विर्भावः । उदीर्णवर्णादुच्चारिताक्षरात् । गलितां गलन्तीमित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वात् । अत एवाह **वृत्तिकारः**—'सुप्तशयितेत्येवमादयो वर्तमाने क्ते द्रष्टव्याः' इति । इदमेव कवेर्विवक्षितम् । यदन्यत्र 'प्रत्यक्षरगलत्सुधाम्' इत्यवोचत् । अत एव प्रत्यग्रधाराम् अतिरसामित्यर्थः । **आघ्रायेति** ॥ यजुरेवामोदः परिमलविशेषः तेन मेदुरांस्तन्मयान्

कञ्चुकी—भद्र, निरङ्कुशाः स्वयंभूदेवप्रवृत्तयः । विष्णोरवतारः खल्वयं वीररुद्रोऽपि अचिन्त्यमहिमा ।

एष दृष्टनष्टबीजानुसरणरूपः परिसर्पः ।

अत्र स्वप्रवृत्तान्तख्यापनाल्लक्ष्यस्य दिग्विजययात्रोद्यमेनालक्ष्यस्य बीजस्योत्पादनादुद्भेद इति प्रतिमुखसंधिरयम् ।

दारकः—*एव्वं एदम् । अमाणुसो खु सो पहावो ।

कञ्चुकी—कुत्रेदानीं राजपुत्रः ?

दारकः—†काअईअकुलदुग्गादेवीसमाराहणेण विअअपत्थाणमंगलं काऊण तत्थ हणुमदअलपेरंतबहिरुज्जाणे णिवेसिअखंधावारो अमच्चपरिवुदो जुवराओ चिट्ठई । ता अणुजाणीहि मम तत्थ पत्थाणं ।

कञ्चुकी—भद्र ! साधय । अहमपि राजकुलं प्रविशामि ।

(इति यथोचितं परिक्रम्य निष्क्रान्तौ ।)

इयं चूलिका ।

(ततः प्रविशति यथानिर्दिष्टः प्रतापरुद्रो मन्त्रिणः परिजनश्च ।)

---

* एवमेतत् । अमानुषः खलु स प्रभावः ।

† काकतीयकुलदुर्गादेवीसमाराधनेन विजयप्रस्थानमङ्गलं कृत्वा तत्र हनुमदचलपर्यन्तबहिरुद्याने निवेशितस्कन्धावारः अमात्यपरिवृतो युवराजस्तिष्ठति । तदनुजानीहि मम तत्र प्रस्थानम् ।

---

इत्यर्थः । 'यजुर्वेदे तिष्ठति मध्ये अह्नः' इति श्रुतेः । 'भञ्जभासमिदो घुरच्' एतेन भानुकिरणानां पुष्पसमाधिसिद्धेः ज्ञात्वेत्यस्मिन्नर्थे आघ्राय इति पदं बोद्धव्यम् । मध्याह्ने कर्तव्या माध्याह्निकी । 'कालाट्ठञ्' इति शैषिकष्ठञ्प्रत्ययः ॥

इति नाटके प्रथमोऽङ्कः ।

चूलिकामुदाहरति—नेपथ्य इत्यादिना ॥ ततः प्रविशतीति ॥ नेपथ्यमेव, न रङ्गम्, अन्यथा चूलिकालक्षणभङ्गप्रसङ्गात् । यौवनमतिशयानयेति ॥ अत्रैव पुरुषार्थलाभादिति भावः । जरया संचर इति ॥ 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् । पुरुषार्थमाह—ययेति ॥ अनुभवितास्मि । अनद्यतने लुट् । बिन्दुं

**प्रतापरुद्रः**—

किं राज्येन शमोन्मुखं रचयता तातं कुलालम्बनं
किं चास्मिन् समुदाहरन्ति महतो दोषान् बहून् सूरयः ।
धर्माध्वा च खिलीकृतोऽयमधुना कः संचरेदस्खलं-
स्तन्नेष्टं किल यौवराज्यमपि मे बाल्योत्सवे क्रीडतः ॥ ३ ॥

तद्वयं महाराजभुजपरिघमसृणितेषु दिगन्तेषु विजययात्राविनोदेन विहरामहे ।

एतद्राज्येऽनिच्छाभिधानाद्विधूतम् ।

**मन्त्रिणः**—राजपुत्र! सर्वपथीनया काकतीयान्वयभाग्यसंपदा त्वां धुरंधुरं लब्ध्वा नरेन्द्रश्चिरमासक्तां धुरं शिथिलयितुमध्यवस्यति । आचारश्चायं काकतीश्वराणां यद्धौरेये पुत्रे शमोन्मुखत्वम् । कुलस्वामिना स्वयंभुवाऽप्येवमेवानुशिष्टम् । अनतिक्रमणीया राजपुत्रेण गुर्वोर्गरीयसी खल्वाज्ञा । कलिकालदोषशिथिलधर्मप्रतिष्ठां निर्वोढुं वोढुं च महतीं महीधुरमवतीर्णस्य काकतीयविष्णोस्तव न सांप्रतं प्रत्याख्यातुम् ।

---

योजयति—**एष इति** ॥ इतोऽपि जरायाः श्लाघ्यत्वमेवेत्याह—**पदे पद इति** ॥ **सपादोपग्रहमिति** । सव्यदक्षिणपाणिभ्यां सव्यदक्षिणपादोपस्पर्शरूपो गुरुनमस्कारः पादोपग्रहः । तदुक्तं **मनुना**—'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥' इति । उत्तिष्ठते उद्युङ्क्ते; 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् ॥ **भद्रेति** ॥ अत्र पूर्वाङ्के स्वप्नदृष्टस्य मध्याह्नवर्णनया नष्टस्य च बीजस्य स्वयंभूदेवप्रसादरूपस्य 'भद्र निरङ्कुशाः' इत्यनेनानुसर्पणात् परिसर्प इत्यर्थः । अत एवायं प्रतिमुखसंधिरित्याह—**अत्रेति** ॥ उद्भेदः प्रकाशनम्, भद्रेत्यादिवाक्येनेति भावः । **एवमेतदित्यादि** ॥ स्पष्टम् । इयं चूलिका । **किमिति** ॥ तातं शमोन्मुखं विरक्तं रचयता राज्येन, मय्यर्पितेन सतेति शेषः । किं, न मे किंचित् साध्यमस्तीति भावः । न केवलमस्मिन् राज्ये पितृवियोगादिष्टहानिरनेकमहादोषसंभवादनर्थप्राप्तिश्चेत्याह—**किं चेति** ॥ अत एवोक्तं **महाभारते शान्तिपर्वणि** भीमं प्रति युधिष्ठिरेण—'असंतोषोऽप्रमोदश्च मदो रागोऽप्रशान्तता । बलमोजोऽभिमानश्च समुद्वेगश्च सर्वतः ॥ एभिः पाप्मभिराविष्टं राज्यं त्वमभिकाङ्क्षसि ॥' इति । नन्वेवं सति 'यदह्ना कुरुते कर्म प्रजा धर्मेण पालयन् । दशवर्षसहस्राणि तस्य भुङ्क्ते महत् फलम् ॥' इत्यादिना राज्ये महाफलप्रतिपादकमन्वादिवचनविरोधः स्यादित्याशङ्क्य, तस्य युगान्तरविषयत्वान्न विरोध इत्याशये-

**प्रतापरुद्रः**—(सानुरोधं)

स्वयंभूस्तात इत्येतावीश्वरौ दिव्यमानुषौ ।
तयोरन्यतरो राजा युवराजोऽस्मि सर्वथा ॥ ४ ॥

**मन्त्रिणः**—राजपुत्र! साधारणोऽयं विनयः काकतीश्वराणां स्वयंभुवि महाराजे च ।

**एष प्रकृतविषयारत्युपशमाच्छमः ।**

**परिजनः**—*काअईअकुलट्ठविरो तत्तभवंतो सअंभूदेवो धुरं धारेदु । राअउत्तो उण रज्जसिरिअं अंके आरोवेदु ।

(प्रतापरुद्रः समन्दस्मितं परिजनमवलोकयति ।)

**एतत् परिहासवचोरूपं नर्म ।**

**परिजनः**—† चिरेण चरिअत्था मेइणी संवुत्ता ।
गोत्तगिरिसिहरणिट्ठुरविअडसिलावसइबब्बरंगीए ।
खोणीए होदु वासो बाहुम्मि पआवरुद्दस्स ॥ ५ ॥

---

* काकतीयकुलस्थविरस्तत्रभवान् स्वयंभूदेवो धुरं धारयतु । राजपुत्रः पुना राज्यश्रियमङ्के आरोपयतु ।

† चिरेण चरितार्था मेदिनी संवृत्ता ।
गोत्रगिरिशिखरनिष्ठुरविकटशिलावसतिबर्बराङ्ग्याः ।
क्षोण्या भवतु वासो बाहौ प्रतापरुद्रस्य ॥

---

नाह—**धर्माध्वेति** ॥ अयं यज्ञदानतपोज्ञानलक्षणः । खिलीकृतः संप्रति पादमात्रावशिष्टत्वादिति भावः । अत एवोक्तं **सूर्यसिद्धान्ते**—'कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया' इति । **आदिपुराणे**ऽप्युक्तम्—'न विद्वत्ता न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ' इति । अधुना कलिकाले अस्खलन्नप्रमत्तः कः संचरेत् । न कोऽपि संचरितुं शक्नुयादित्यर्थः । 'शकि लिङ् च' इति लिङ् । तृतीयाभावान्नात्मनेपदम् । तद्यौवराज्यमपि नेष्टं किल, किमुत दुष्टं राज्यमिति भावः । मसृणितेषु निष्कण्टकीकृतेषु । अत एव स्वस्य न प्रयास इति विनयोक्तिः । **राजपुत्रेति** ॥ सर्वान् पथो व्याप्नुवत्या सर्वपथीनया । 'तत्सर्वादेः' इति खप्रत्ययः । **आचारश्चेति** ॥ 'धर्म्ये वर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् । पुत्रसंक्रामितश्रीश्च वने वन्येन

†जह हरिचंदस्स भुए जह रहुणाहस्स बाहुफलअम्मि ।
काअइलच्छीपइणो बाहुम्मि तहा मही रमदु ॥ ६ ॥

(प्रतापरुद्रः सबाहुस्फुरणमधोमुखस्तिष्ठति ।)

**एषा परिजनवचनोत्था प्रीतिर्नर्मद्युतिः ।**

**मन्त्रिणः**—राजपुत्र ! काकतीयपुरुषोत्तमस्य तव पाणिग्रहणाय स्पृहयन्ती राज्यलक्ष्मीर्विलम्बं न सहते ।

**परिजनः**—

* विज्जावहूणं अहिअं दठ्ठूण पइम्मि पणअविस्संभं ।
खोणी लच्छी अ कहं विलंबिअं सहउ जुवराए ॥ ७ ॥

**मन्त्रिणः**—इत्थमेव ।

स्वतेजसा परिष्कृत्य प्रधानागारमुत्सुका ।
प्रतीक्षतेऽद्य राज्यश्रीर्युवराजसमागमम् ॥ ८ ॥

**एष मन्त्रिणां परिजनस्य च वाक्यैर्बीजानुरागप्रकाशनात् प्रगमः ।**

**परि०**—** कहं अंदरिओ खु एसो महूसओ दिसाविजअजत्ताए ।

---

† यथा हरिश्चन्द्रस्य भुजे यथा रघुनाथस्य बाहुफलके ।
काकतिलक्ष्मीपतेर्बाहौ तथा मही रमताम् ॥
* विद्यावधूनामधिकं दृष्ट्वा पत्यौ प्रणयविस्रम्भम् ।
क्षोणी लक्ष्मीश्च कथं विलम्बितं सहतां युवराजे ॥
** कथमन्तरितः खल्वेष महोत्सवो दिग्विजययात्रया ।

---

वर्तेयेत ॥' इति व्याससमरणात् । गुर्वी दिव्यमानुषयोर्गरीयसी गुरुतरा, पूज्यतमेति यावत् । 'प्रियस्थिर—' इत्यादिना गुरोर्गरादेशः । किंच धर्मसंस्थापनार्थमेवावतीर्णस्य विष्णुमूर्तेस्तवेदं दुष्परिहरमित्याह—**कलिकालेति** ॥ प्रत्याख्यातुं परिहर्तुम् । तर्हि तावत् स्वयंभूदेव एव महाराजोऽस्तु, पूर्ववदेवाहं युवराज एवेति वचनभङ्ग्या राज्यमङ्गीकरोति—**स्वयंभूरिति** ॥ अरत्युपशमात् द्वेषनिवृत्तेः । **सबाहुस्फुरणमिति** ॥ पुंसो दक्षिणबाहुस्फुरणं शुभनिमित्तमिति वक्ष्यते । नर्मवचनमनुरागबीजोद्घाटनम् । **विज्जेति** ॥ वधूनां भर्तृवाल्लभ्यमवलोक्य सपत्न्यः समुत्सुका भवन्तीति भावः । राज्यश्रियो वासकसज्जिकासमाधिमाह—**स्वतेजसेति** ॥ गतार्थमेतत् । **कहमिति** ॥

एतद्दिगन्तयात्रया प्रकृतकार्यविलम्बनान्निरोधः ।

**मन्त्रिणः**—(सावज्ञं) कथं चिरयन्त्यन्धचमूपतयः । अथवा किं तैः ; वयमपि न केवलं मन्त्रशस्त्राः, किंतु बहुशः समरापदानाराधितस्वामिन एव ।

एतन्निष्ठुरवचनरूपं वज्रम् ।

(प्रविश्य) **दौवारिकः**—* जेदु जेदु जुअराओ । एदे खु चमूपइणो पडिहारभूमिभाअम्मि सज्जीकिअचउरंगबला वट्टन्ति ।

**मन्त्रिणः** — अचिरं भोः प्रवेशय ।

**दौवारिकः**—तथा ।

(इति निष्क्रम्य सेनाधिपतिभिः सह पुनः प्रविष्टः ।)

**सेनापतयः**—(यथोचितं प्रणम्य) स्वामिन् काकतीयकुलतिलक ! सर्वतोमुखाटोपा वाहिन्यः शौर्योदन्वन्तं भवन्तमनुप्राप्ता एव । तदनुगृहयालुना कटाक्षेण निरीक्ष्यन्ताम् ।

एतदनुनयवचनरूपं पर्युपासनम् ।

**मन्त्रिणः**—राजपुत्र ! तर्हि समारुह्यतां प्रतिपक्षनिवारणो वारणः । आलोक्यन्तां निरन्तरपरिपन्थिप्रमाथिन्यो वरूथिन्यः । प्रस्तूयतां सेनापुरःसराक्रान्तसकलसामन्तविजयस्थानं प्रस्थानम् ।

---

* जयतु जयतु युवराजः । एते खलु चमूपतयः प्रतीहारभूमिभागे सज्जीकृतचतुरङ्गबला वर्तन्ते ।

---

निरोधनलक्षणे 'छद्मना' इत्युक्तम्; तत् कारणमात्रोपलक्षणमिति द्रष्टव्यम् । **सावज्ञमिति** ॥ समरमेवापदानमद्भुतकर्म, तेनाराधितस्वामिनः प्रसादितेश्वराः । वज्रलक्षणे प्रत्यक्षग्रहणं केवलस्याप्युपलक्षणमित्याशयेनाह—**एतन्निष्ठुरेति** ॥ द्वारे नियुक्तो दौवारिको वेत्रधरः । 'तत्र नियुक्तः' इति ठक् । 'द्वारादीनां च' इत्यैजागमः । **स्वामिन्निति** ॥ सर्वतोमुखाटोपाः सर्वतोदिक्संभ्रमाः । वाहिन्यः सेनाः । शौर्योदन्वन्तमिति रूपकबलादुदकसंभ्रमवत्यो नद्यश्चेति लभ्यते । अनुगृहयालुनाऽनुग्रहीत्रा कटाक्षेण अनुग्रहदृष्ट्येत्यर्थः । 'गृह ग्रहणे' इत्यस्माद्धातोरदन्ताच्चुरादिणिचि 'स्पृहिगृहि—' इत्यादिनाऽऽलुच्प्रत्ययः । अतोलोपस्य स्थानिवत्त्वान्न लघूपधगुणः । **राजपुत्रेति** ॥ परिपन्थिप्रमाथिन्यः शत्रुघातिन्यः । वरूथिन्यः सेनाः । **प्रस्तूयतामिति** ॥

**प्रतापरुद्रः**—यथाभिरुचितममात्येभ्यः ।

(इति गन्धगजाधिरोहणं नाटयति ।)

**मन्त्रिणः**—

करोदग्रेण महसा विष्वगाक्रमितुं दिशः ।
आरोहति गजं वीररुद्रो भास्वानिवोदयम् ॥ ९ ॥

एतत् प्रकृतानुगुण्येन विशेषबन्धवचनं पुष्पम् ।

(सर्वे युवराजहस्तिनं पुरस्कृत्य ससंबाधं किंचित् परिक्रामन्ति ।)

**सेनापतयः**—(सोत्साहप्रणामं) स्वामिन्नितो दीयतां दृष्टिः ।

धावत्पादातपादाहतिदलितमहीरन्ध्रनीरन्ध्रनिर्यद्-
धूलीजालाम्बुदान्तर्विलसदसिलताविद्युदुद्दामदीप्ताः ।
उद्यन्निस्साणराणस्तनितपटपटद्दिक्तटाः प्रारभन्ते
प्रावृट्लक्ष्मीं ध्वजिन्यः करिकरटतटस्यन्दिदानाम्बुधाराः ॥ १० ॥

---

प्रस्थानारम्भ एव नासीरैः सामन्तनगराण्याक्रम्यन्त इति सेनाबाहुल्यं सूच्यते । **यथेति** ॥ गन्धोपलक्षितो गजो गन्धगजः । यद्यपि **गजशास्त्रे** त्रैवर्णिकजातिगजेषु गन्ध उक्तस्तथाप्यौचित्यादत्र क्षत्रियजातिरुच्यते । तदुक्तम्—'भद्रश्रीहरितालगुग्गुलुशिलागन्धोऽतिशूरो रणे नानाशस्त्रनिपातवेगसहनः स्तम्बेरमः क्षत्रियः ॥' इति । अत्र शुभाशुभगन्धविभागस्तदभिव्यक्तिस्थानं च तत्रैवोक्तम्—'स्वेदे द्वारमले शुभाशुभकरं गन्धं सुधीर्लक्षयेत् सेव्यो भूरुहलाजपाटलघृतप्रख्यः प्रशस्ताह्वयः । एतस्मादपरः शुभोऽयमुदितः सत्त्वेन रूपेण यो युक्तः सोऽपि मतङ्गजः समुचितः कल्याण इत्युच्यते ॥' इति । **करेति** ॥ करेणोदग्रेणोद्धतेन महसा तेजसा भुजबलेनेत्यर्थः । अन्यत्र करैः किरणैः । उदयं पूर्वपर्वतम् । अत्र मन्त्रिणां वीररुद्रं प्रति रागप्रकाशविशिष्टवचनात् पुष्पं नामाङ्गमित्याह—**एतदिति** ॥ प्रकृतानुगुण्येन बीजानुकूल्येनेत्यर्थः । विशेषबन्धो रागविशेषबन्ध इत्यर्थः । **धावदिति** ॥ पदातीनां समूहः पादातम् । भिक्षादित्वादण्प्रत्ययः । निस्साणराणो निस्साणध्वनिः । **राण इति** ॥ यद्यपि 'वशिरण्योरुपसंख्यानम्' इति अबभावे घञ् बाधितः । अत एवोक्तम् **अमरकोशे** 'रणः क्वणः' इति । तथापि स्रावादिवत् बाहुलको घञ् द्रष्टव्यः । पटशब्दादव्यक्तानुकरणात् 'नित्यवीप्सयोः' इति द्विर्भावे 'सर्वप्रातिपदिकेभ्यः—' इत्याचारे क्विप् कथंचित् कल्पनीयः । ततो लटः शत्रादेशः । पटदित्यस्यैवानुकरणत्वे पूर्वावयवस्य तकाराभावश्चिन्त्यः । करटतटं गण्डस्थलम् । सेनाङ्गेषु मतङ्गजसन्नाहमाह—**बल इति** ॥ चिरमत्सराः पक्षच्छेदात् प्रभृति प्ररूढवैराः । अत एव पुरन्दरहरिजयव्यवसिताः

(अन्यतो निरूप्य)

बले चलति संभ्रमप्रतिभये विजेतुं दिशः
 पुरन्दरहरिज्जयव्यवसिताः सहायोद्धताः ।
चलन्ति चिरमत्सराः शिखरिणो यथा दन्तिनो
 भरावनमदुन्नमद्भुजगराजफक्कत्फणाः ॥ ११ ॥

**परिजनः**—(विलोक्य साश्चर्यं) * महंतो खु एसो तिलिंगसुभडाणं उस्साहो ।

(संस्कृतमाश्रित्य)

उद्यत्तोमरडामराः प्रतिपदप्रोत्क्षिप्तकौक्षेयकाः
 स्वैरोद्गीर्णभुसुण्डयः पटुतराकृष्टध्वनत्कार्मुकाः ।
भ्राम्यद्भीमगदाः समग्रविहरत्प्रासाः स्फुरत्पट्टसाः
 खेलन्त्यन्ध्रचमूभटाः सवपुषो रौद्रप्रकारा इव ॥ १२ ॥

**मन्त्रिणः**—अहो तुरङ्गतरङ्गास्त्रिलिङ्गाधिपतेः ।

---

* महान् खल्वेष त्रिलिङ्गसुभटानामुत्साहः ।

---

प्राचीविजयोद्युक्ता इत्यर्थः । इयन्तं कालं तूष्णीं स्थित्वेदानीं वैरनिर्यातने हेतुमाह—**सहायोद्धता इति** ॥ यथा कस्यचिद्वस्तुनो भाराक्रान्तः कश्चन भागो नमति, भागान्तरं तून्नमति, तद्वद्दन्तिभाराक्रान्तभूतलद्वारा भुजगराजस्य केषांचित् फणानामवनमनमितरेषामुन्नमनं द्रष्टव्यम् । फक्कनमत्र संकोचः । 'फक्क नीचैर्गतौ' इत्यस्माद्धातोर्लटः शत्रादेशः । अत्र यथाशब्दमाहात्म्याद् यद्यप्युपमा प्रतीयते, तथाप्युपमानभूतानां विशिष्टशिखरिणामुपमेयदन्तिरूपतयाऽभ्यूहनादुत्प्रेक्षायां पर्यवस्यतीत्युपमोपक्रमोत्प्रेक्षेयम् ॥ पत्तिसंपत्तिमाह—**उद्यदिति** ॥ तोमरा दण्डविशेषास्तैर्डामरा भयंकराः । कौक्षेयकाः खड्गाः । 'कुलकुक्षि—' इत्यादिना ढकञ्प्रत्ययः । स्वैरोद्गीर्णभुसुण्डयः स्वेच्छोद्यतदारुमयायुधविशेषाः । कर्मणे प्रभवतीति कार्मुकं धनुस्तद्विशेषो वा । गदाः प्रसिद्धाः । प्रासाः कुन्तापरपर्यायाः क्षेपणीया आयुधविशेषाः । तदुक्तं **वृत्तिकारेण** 'अकर्तरि च कारके संज्ञायाम्' इत्यत्र 'प्रास्यत इति प्रासः' इति । रौद्रप्रकारा रौद्रभेदाः । तोमरादीनामभिधानं **वैजयन्त्याम्**—'तोमरोऽस्त्री लोहहुलदण्डे कासूश्च सर्वला ।' ['हुलं द्विफलपत्राग्रम् ।'] 'भुसुण्ढी स्यात् दारुमयी वृत्तायःकीलसंचिता ।' 'कार्मुकं तु चतुर्हस्तम् ।' 'पट्टसो लोहदण्डो यस्तीक्ष्णधारः क्षुरोपमः' इति । तुरङ्गसामग्रीमाह—**उत्क्षिप्येति** ॥ पश्चिमपादाभ्यां भुवि

उत्क्षिप्योत्क्षिप्य पादौ रवितुरगशिरस्ताडनायेव पूर्वौ
पाश्चात्याभ्यां पदाभ्यामपि धरणिमवष्टभ्य संरब्धनुन्नाम् ।
वालैर्व्याधूयमानैः प्रतिनृपतिहयोत्साहमुन्मार्जयन्तः
क्रामन्त्यश्वाः सहेलक्रमणपरिणमत्पञ्चधाराप्रपञ्चाः ॥ १३ ॥

(विलोक्य) अहो विदलितपरबलमनोरथानां रथानां सम्भ्रमः ।

तथा हि—

रथाः सरभसं भ्रमन्निबिडहेमनेमिक्षत-
क्षमातलसमुच्चलद्बहुलधूलिजालाम्बुदैः ।
तिरोहितमसूयया सपदि भानवीयं रथं
विधाय मुखरीभवन्त्यनिभृताक्षधूर्निस्वनाः ॥ १४ ॥

**प्रतापरुद्रः**—(सर्वतोऽवलोक्य सप्रमोदं) कथं समग्रसाधनानि सैन्यानि ।

बृंहमाणगजाकीर्णा हेषमाणहयाकुलाः ।
संक्रीडत्स्यन्दनाः क्ष्वेडसुभटाः सैन्यसंपदः ॥ १५ ॥

---

स्थित्वा मुहुरग्रपादोत्क्षेपणमश्वानां पुरुषाख्यस्थानभेदः । तदुक्तम्—'मुहुः पश्चिम-
पादाभ्यां भुवि स्थित्वाऽग्रपादयोः । ऊर्ध्वं प्रेरणया स्थानमश्वानां पुरुषः स्मृतः ॥'
इति । अत्र पूर्वपादोत्क्षेपणस्य सूर्याश्वशिरस्ताडनफलकत्वमुत्प्रेक्ष्यते । उत्क्षिप्येति
'नित्यवीप्सयोः' इति द्विर्भावः । पश्चाद्भवौ पाश्चात्त्यौ । 'दक्षिणा-
पश्चात्पुरसस्त्यक्' । संरब्धा संरम्भविषयीभूता सती नुन्नेत्यसंबन्धे संबन्धरूपाति-
शयोक्तिः । तां धरणिमवष्टभ्यालम्ब्य, तत्र स्थित्वेत्यर्थः । सहेलक्रमणेन विनोदगत्या
परिणमन्तः प्रयत्नं विना प्रवर्तमाना इत्यर्थः । धारा नामास्कन्दितादयो गतिभेदाः
पञ्च । तदुक्तं **वैजयन्त्याम्**—'अश्वानां तु गतिर्धारा विभिन्ना सा च पञ्चधा'
इति । 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः ॥'
इति **अमरश्च** । एतासामेव **अश्वशास्त्रे** संज्ञान्तरेणोक्तानां प्रत्येकं त्रैविध्ये पञ्चदश-
विधत्वम् । तदुक्तम्—'गतिः पुला चतुष्का च तद्वन्मध्यजवा परा । पूर्णवेगा तथा
चान्या पञ्च धाराः प्रकीर्तिताः ॥ एकैका त्रिविधा धारा हयशिक्षाविधौ मता । लघ्वी
मध्या तथा दीर्घा ज्ञात्वैता योजयेत् क्रमात् ॥' इति । तदेतन्मनसि निधायाह—
**पञ्चधाराप्रपञ्चा इति** ॥ लोके कश्चिद्वीरभटः प्रतिभटमभिभूय गर्जति, तत्समाधिमत्र
भानुरथाभिभाविनां वीररुद्ररथानामाह—**रथा इति** ॥ असूयया स्पर्धयेवेत्यर्थः ।
अक्षाणां चक्राधारकाष्ठानां धुरोऽग्राणि अक्षधुरः । 'अक्षं रथाङ्ग आधारे' इति
**वैजयन्ती** । 'अनक्षे' इति निषेधात् 'ऋक्पूरब्धूः—' इत्यादिना न समासान्तः ।

**मन्त्रिणः**---युवराजालोकनादुद्वेलः सैन्यसागरो वर्तते ।

अभ्यापतन्तीरभितो महीभृद्वाहिनीर्बहूः ।
काकतीयबलाम्भोधिरेष स्वैरं ग्रसिष्यते ॥ १६ ॥

**सेनापतयः**—यदादिशन्त्यमात्याः । (इति सप्रणामं) विजययात्राकुतूहलिन्यो ध्वजिन्यः सांप्रतं युवराजस्याज्ञां प्रतिपालयन्ति ।

(प्रतापरुद्रः सप्रसादममात्यानालोकयति । )

**मन्त्रिणः**---(सोत्साहं) प्रतिष्ठन्तां प्राचीं प्रति सैन्यानि ।

**सेनापतयः**---यथाऽऽदिशन्त्यमात्याः ।

(इति प्रस्थाननाटितकेन समन्तादवलोक्य सहर्षातिशयम् )

पवनेनानुकूलेन प्रसारितपटाञ्चलाः ।
उद्युञ्जन्त इवाक्रष्टुं ध्वजाः सौत्रामणीं दिशम् ॥ १७ ॥

(सर्वे शकुनमभिनन्दन्ति । )

**एष प्रस्थानानुगुणशकुनगुणकथनादुपन्यासः ।**

---

निभृतो निश्चलो न भवतीत्यनिभृतो नित्यप्रवृत्त इत्यर्थः । तथाभूतोऽक्षधूर्निस्वनो येषां ते तथोक्ताः । **बृंहमाणेति** ॥ बृंहमाणा बृंहणशीलाः । ताच्छील्ये चानश्प्रत्ययः, न तु शानच्, 'बृहि शब्दे' इत्यस्य धातोः परस्मैपदित्वात् । अत एव **भट्टमल्लः**—'हेषते हेषतेऽश्वानां हस्तिनां बृंहतीति च' इति । संक्रीडत्स्यन्दनाः कूजद्रथाः । 'क्रीडोऽनुसंपरिभ्यश्च' इत्यत्र 'समोऽकूजने' इति नियमात् परस्मैपदम् । अत एवोक्तं **तत्रैव**—'उच्चरति च संक्रीडत्येतौ शकटकूजने' इति । क्ष्वेडन्ते सिंहनादं कुर्वन्तीति क्ष्वेडाः । 'ञि क्ष्विदा स्नेहनमोचनयोः' इत्यस्माद्धातोः पचाद्यच्, पृषोदरादित्वाद्दकारस्य डकारः । **कविकल्पद्रुमकारस्तु** 'डान्त एवायं धातुः' इत्याह ; धातूनामनेकार्थत्वादुक्तार्थलाभः । अत एव 'क्ष्वेडा तु सिंहनादः स्यात्' इति **अमरः** । क्ष्वेडदिति काचित्कः शत्रन्तपाठोऽस्य धातोरनुदात्तेत्त्वादुपेक्षणीयः । **अभ्यापतन्तीरिति** ॥ महीभृद्वाहिनीः शत्रुभूपालसेनाः, अन्यत्र पर्वतप्रभवा नदीः । तदुक्तं **मानसोल्लासे**—'व्रजेदब्धिरिवाक्षोभ्यो निगिरन्निव वाहिनीः । शूराणां सिंहनादैश्च हेषारावैश्च वाजिनाम् । महारथमहाध्वानैर्मातङ्गघनगर्जितैः ॥' इति । सुत्राम्णः इन्द्रस्येमां सौत्रामणीं दिशं प्राचीम् । शकुनं शुभनिमित्तम् । 'शकुनं तु शुभाशंसिनिमित्ते, शकुनः खगः' इति **विश्वः** । अनुकूलवायोः शुभनिमित्तत्वं

**प्रतापरुद्रः**---(पुरोऽवलोक्य) कथं कराभ्यामुत्क्षिप्तसाक्षतकनकपात्रः समागत एव विप्रवरः ।

(प्रविश्य)

**विप्रः**---(सविनयमग्रतः स्थित्वा प्राध्वं दक्षिणभुजमुद्यम्य) विजयतां विजयतां वीररुद्रः । राजपुत्र ! स्वयंभूदेवमहोत्सवाद्यनन्तरं महीसुरवराशीर्वाद-वासिताः काकतीयमहाराजेन प्रेषिताः खल्विमे मङ्गलाक्षताः ।

**प्रताप०**—(सप्रणामादरं गृहीत्वा तान् निजोत्तमाङ्गे गजमूर्धनि च निधाय)

अमूलात् फलिता प्रसत्तिलतिका पत्युः स्वयंभूप्रभो-
राज्ञा क्षत्रियमौलिमण्डनमणेस्तातस्य सानुग्रहा ।
विप्राशीर्वचनानि मन्त्रसुरभीण्याकाङ्क्षितान्यन्वहं
पौराणां च जयोत्तराणि तदमूरीषज्जयाः स्युर्दिशः ॥ १८ ॥

**एष ब्राह्मणक्षत्रियादिवर्णकीर्तनाद्वर्णसंहारः ।**

**मन्त्रिणः**—राजपुत्र ! स्वभावनिरर्गलस्य तव भुजार्गलयोरोजायितस्य कियती भूतलविजयविडम्बना ।

---

च तत्रैव—'दक्षिणाक्ष्णः परिस्पन्दात् दक्षिणस्य भुजस्य च । मनसश्च प्रसादेन स्वानुकूलानिलेन च ॥ एवं निमित्तैर्निश्चित्य विजयं भूपतिर्व्रजेत् ॥' इति । उपन्यासाख्यमङ्गं लक्ष्ये योजयति—**एष इति** ॥ उपन्यासलक्षणेऽपि 'प्रकृतानु-गुण्येन' इत्येतदनुषज्यत इत्याशयेनाह—**प्रस्थानानुगुणेति** ॥ बीजोपयोगित्वात् प्रस्थानस्य प्रकृतत्वम् । तदनुगुणस्य शकुनस्यानुरागहेतुभूतस्य कथनादुपन्यास इत्यर्थः । विप्रविशेषप्रवेशं सूचयति—**कथमिति** ॥ **सविनयमिति** ॥ प्राध्वमा-शीर्वादानुकूल्येनोद्यम्य । 'आनुकूल्यार्थकं प्राध्वम्' इति **अमरः** । मकारान्तमव्ययं चैतत् । ननु यात्रायां कनकपात्रादिमङ्गलद्रव्यदर्शनं कार्यसिद्धिकरमस्तु । किं तु 'एकस्मिन् ब्राह्मणे दृष्टे कार्यहानिः' इति किंवदन्त्याः का गतिरिति चेन्नैष दोषः—तस्याः कृपणब्राह्मणविषयत्वात्, विशिष्टब्राह्मणदर्शने महाफलस्मरणात् । इदमपि तत्रैवोक्तम्—'पूर्णकुम्भे तथाऽऽदर्शे दध्नि मद्ये तथाऽऽमिषे । मीने शङ्खे ध्वजे छत्त्रे चामरे चारुयोषिति ॥ चाषे मृगे भरद्वाजे फलपुष्पाक्षतेषु च । वृषभे समदे नागे सितवाहे द्विजोत्तमे ॥ सुवर्णे दिव्यरत्ने च वीणायां पटहेऽपि च । बद्धे चैकपशौ

**परिजनः**—*विअअलच्छीपाणिग्गहणसमअदिण्णा विअ मङ्गलक्खदा जुवराअस्स सीसे दीसंदि ।

**विप्रः**—राजपुत्र ! तत्तद्दिग्विजययात्रावार्ताहारिणः पुरुषा नातिचिरादेव प्रेषणीया इति महाराजस्याज्ञा ।

**प्रतापरुद्रः**---शिरसि कृतस्तातस्य नियोगः । (अमात्यान् प्रति) कतिचन यूयं काकतीश्वरसेवार्थं निवर्तध्वम् । कतिपये विजययात्रापराः प्रवर्तध्वम् ।

**अमात्याः**---(सप्रणामं) यदाज्ञापयति युवराजः ।

**विप्रः**---स्वस्ति विजयाय शिवाः पन्थानः सन्तु राजपुत्राय ।

**प्रतापरुद्रः**---(सप्रश्रयं) भगवन्ननुजानीहि । वयमितः प्रतिष्ठामहे ।

(इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे । )

## ॥ इति विजययात्राविलासो नाम द्वितीयोऽङ्कः ॥

---

* विजयलक्ष्मीपाणिग्रहणसमयदत्ता इव मङ्गलाक्षता युवराजस्य शीर्षे दृश्यन्ते ।

---

दृष्टे यात्रा भवति सिद्धिदा ॥' इति । **वसन्तराजीये**ऽप्युक्तम्—'धृतातपत्र शुभशुक्लवासाः पुष्पार्चितश्चन्दनचर्चिताङ्गः । विप्रः शिखावान् कृतभोजनश्च ददाति दृष्टः पथि सर्वसिद्धिम् ॥' इति । महोत्सवादीत्यत्रादिशब्देन धेन्वादिदानं गृह्यते । तदुक्तं **मानसोल्लासे**—'ततः कृत्वा महापूजामुद्दिश्य कुलदेवताम् । धेनुं भूमिं हिरण्यं च विप्रेभ्यो विधिनाऽर्पयेत् । तदाशिषः समादाय नीराजितहयद्विपः ॥' इति॥ **आमूलादिति** ॥ संपूर्णः स्वयंभूप्रसाद इत्यर्थः । पौराणामाकाङ्क्षितानि मनोरथाः ॥ 'नपुंसके भावे क्तः' । जयोत्तराणि जयप्रधानानि । तत्तस्मादमूश्चतस्र एव दिशः । ईषज्जयाः सुलभजया इत्यर्थः । 'ईषद्दुस्—' इत्यादिना खल्प्रत्ययः ॥ दिग्विजये देवताप्रसादादिकं बृहतीफलभञ्जने महोपलप्रयोगमनुकरोतीति भावः । अङ्कं योजयति- **एष इति** ॥ **राजपुत्रेति** ॥ 'ओजःशब्दो वृत्तिविषये तद्वति वर्तते' इति **पदमञ्जरीकारः** । अतस्तद्वतः सिंहशार्दूलादेरिवाचरितमोजायितं बलमित्यर्थः । 'कतुः क्यङ् सलोपश्च' इति क्यङन्तात् भावे क्तः । 'ओजसोऽप्सरसो नित्यम्' इति नित्यः सलोपः । **स्वस्तीति** । **विजयायेति** ॥ क्रियाग्रहणाच्चतुर्थी । राजपुत्रायेति स्वस्तियोगे । **सप्रश्रयमिति** । **प्रतिष्ठामह इति** ॥ 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥

॥ इति नाटके द्वितीयोऽङ्कः ॥

## ( अथ तृतीयोऽङ्कः )

(ततः प्रविशतो लेखहस्तौ जाङ्घिकौ । )

**एतत्पूर्वाङ्कान्तपात्रेण विप्रेण निर्दिष्टयोः पात्रयोरुत्तराङ्के प्रवेशादङ्कास्यम् ।**

**प्रथमः**---(सानुसंधानाश्चर्यं) अहो प्रतापरुद्रस्य महिमानुभावः, यस्य विजययात्रासंभ्रमेणैव व्याकुलीकृतानि द्वयेषामपि भूभृतां कटकानि ।

**द्वितीयः**---वयस्य, किमुच्यते---

काकतीयप्रदीपोऽयमंशश्चातुर्भुजः स्वयम् ।
यद्वज्रकवचायन्ते प्रसादाश्च स्वयंभुवः ॥ १ ॥

**एष स्वयंभूदेवप्रसादरूपस्य बीजस्यान्वेषणाद् गर्भसन्धिः ।**

**प्रथमः**--(अध्वक्लममभिनीय पुरोऽवलोक्य) प्राप्तेयमन्ध्रनगरी । (किंचित् प्रवेशनाटितकेन समन्ततो निरूप्य) अहो! निरतिशयमौदार्यं रुद्रनरेश्वरस्य । यदेते वैतालिकाः सर्वतो भोगावलीप्रमुखांश्चाटुप्रबन्धानुच्चैः पठन्तः स्वभावरमणीयाः प्रतिरवेण पाठयन्ति च ककुभः ।

---

तत इति ॥ जङ्घया चरत इति जाङ्घिकौ वार्ताहरौ । अङ्कास्यं योजयति—एतदिति ॥ महिमानुभावो महिमातिशयः । द्वयेषां पर्वतानां राज्ञां च । कटकानि पर्वतनितम्बप्रदेशा राजधान्यश्च । 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः । काकतीयेति ॥ चातुर्भुजो वैष्णवः । वज्रकवचायन्ते वज्रकवचवदाचरन्ति । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्ययः । ङित्वादात्मनेपदम् । गर्भसंधिं योजयति—एष इति ॥ बीजस्येति ॥ प्रतिमुखसंधौ लक्ष्यालक्ष्यतया दृष्टनष्टस्येति शेषः । एतच्चान्वेषणादित्यनेन लभ्यते । वैतालिकभोगावलीप्रमुखा उक्तलक्षणाः ॥ पाठयन्तीति ॥ प्रतिदिशं प्रतिध्वनिरुत्पद्यत इत्यर्थः । अपवार्येति ॥ रहस्यकथनार्थमिति भावः । सम्यगिति ॥ मागधलक्षणमुक्तम्—'राज्ञः पुरजनस्यापि मङ्गलाचारशंसिनः । मान्यैर्मागधिकागीतैर्मागधा इत्युदीरिताः ॥' इति । प्रभुत्वैव रहस्यं, गूढं वस्तु, मागधवेषतिरोहितत्वात् तेषामिति भावः । ध्वजचक्रग्रहणं राज्यसूचकरेखोपलक्षणार्थम् । तदुक्तं

द्वितीयः---(सम्यङ्निर्वर्ण्य सप्रत्यभिज्ञाऽऽश्चर्यमपवार्य) सखे ! पश्य पश्य ।

सम्यङ्मागधवेषधारणतिरोभूता अपि क्ष्माभुजः
सूच्यन्ते प्रभुतारहस्यपिशुनैराविष्कृतैर्लक्षणैः ।
हस्ताग्रैर्ध्वजचक्रलाञ्छिततलैर्वक्षःस्थलैर्विस्तृतै-
राकारैरमनुष्यमात्रसुलभैर्वृत्तैरनीचैरपि ॥ २ ॥

प्रथमः—नूनमेते प्रतापरुद्रसमरपराङ्मुखा वक्षःस्थलविरचितवराह-लक्ष्माणः प्राणत्राणार्थमनया रीत्या काकतीयमहाराजं प्रसादयितुमध्यवस्यन्तीति तर्कयामि ।

एतत् प्रस्तुतोपयोगिप्रतिराजच्छद्माचरणादद्भुताहरणम् । जाङ्घिकेन पुनस्तैस्तैर्लक्षणैर्नरेश्वराभ्यूहनादनुमानं च ।

द्वितीयः—अहो ! विजययात्राश्रवणकुतूहलिता पौराणाम्, यदावामनुसरन्ति पुनः पुनः प्रश्नमालया । तत् सखे ! प्रकाश्यतां प्रतापरुद्रस्य भुजयोर्विजयोदाहरणम् ।

प्रथमः—(किंचिदुच्चैः) भो भोः ! श्रूयतां काकतीयकुलश्लाघाकामधेनुः प्रियोदन्तः ।

जेत्रा काकतिवीररुद्रविभुना सर्वा दिशो निर्जिताः
क्ष्मापालाः करदीकृताः कृतमिदं निर्वीरमुर्वीतलम् ।
यस्योद्बद्धजवैर्भवं सरभसारोहद्द्विषत्कामिनी-
मञ्जीरध्वनिपूर्णकन्दरमुखैर्व्याकुर्वते पर्वताः ॥ ३ ॥

---

वराहसंहितायाम्-'चक्राब्जपरशुतोरणशक्तिधनुः कुम्भसन्निभा रेखाः। कुर्वन्ति चमूनाथं मकरध्वजसंनिभा महीपालम् ॥' इति । वक्षोविस्तारफलमपि तत्रैव—'उरो ललाटं वदनं च पुंसां विस्तीर्णमेव त्रितयं प्रशस्तम्' इति । वृत्तैः जङ्घादाविति शेषः । 'वृत्तजङ्घो भवेद् भूपो वृत्तलिङ्गो भवेद्धनी' इति वचनात् । अनीचैरुन्नतैः वक्षःप्रभृतिषु दीर्घैर्वा हनुप्रभृतिषु । तदपि तत्रैवोक्तम्—'वक्षोऽथ कक्षौ नखनासिकाऽऽस्यं कृकाटिका चेति षडुन्नतानि ॥ हनुलोचनबाहुनासिकं स्तनयोरन्तरमत्र पञ्चमम् । अतिदीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृताम् ॥' इति । अत एवामनुष्यमात्रसुलभैः भूपतिव्यतिरिक्तदुर्लभैरित्यर्थः ॥ सूचितमर्थं द्रढयति—नूनमिति ॥ अस्या अपि रीतेर्दास्यावान्तरभेदत्वादिति भावः । यदाहुः—'पद्यमङ्गुलिविच्छेद उरोविन्यस्तमक्षरम् ।

एष तत्त्वानुकीर्तनरूपो मार्गः ।

**द्वितीयः**—सखे ! नूनमेषु दिवसेषु काकतीयमहाराजो निरन्तरं पुरस्कृतपुरोधःप्रवरामात्यवृद्धो युवराजविजयमाशंसमानो गमयति वासराणि ।

**प्रथमः**—उचितमनुचिन्तितं वयस्येन ।

**द्वितीयः**—(पुरोऽवलोक्य सहर्षं) कथमस्मदीयं वचनमाकर्ण्य नूनं महाराजाय निवेदयितुममात्यपुत्रः सहर्षसंभ्रमं राजकुलाभ्यन्तरं प्रविशति । तदावामपि प्रतीहारभूमिमध्यास्य काकतीश्वरावसरं प्रतिपालयिष्यावः । (इति परिक्रामतः ।)

एतद् वितर्कप्रतिपादनाद्रूपम् ।

(ततः प्रविशत्यमात्यपुत्रः । )

**अमात्यपुत्रः**—(सप्रमोदं) अहो मम धन्यता, यदीदृशानां महोत्सवानां निवेदयितास्मि संवृत्तः । यन्मया विज्ञापितैः श्रवणप्रियंकरणैर्वार्तामृतैः स्वप्न-साक्षात्कृतादपि स्वयंभूदेवप्रसादात् प्रमोदयिष्यते काकतीयवृषा ।

एषोत्कर्षवचनरूपोदाहृतिः ।

(पुरोऽवलोक्य) कथमयं महाराजः पुरोहितैरमात्यैरन्येन परिजनेन च परिवृतो महास्थानमण्टपमधितिष्ठति । तदहमुपसर्पामि । (इति परिक्रामति । )

(ततः प्रविशति यथानिर्दिष्टो राजा, मन्त्रिणश्च पुरोधसश्च । )

---

तन्नामकरणं चेति दास्यमेतच्चतुष्टयम् ॥' इति । शिष्टं स्पष्टम् । प्रियोदन्तः प्रियवार्ता । **जैत्रेति** ॥ करदीकृताः बलिप्रदाः कृताः । अभूततद्भावे च्विप्रत्ययेनेयन्तं कालमजय्या अपि जिता इति लभ्यते । निर्वीरं प्रतिवीररहितम् । ये करं न प्रयच्छन्ति ते प्राणैरेव वियोजिता इत्यर्थः । ततः किं जातमत आह—**यस्येति** ॥ व्याकुर्वते व्याचक्षते । अप्रियाणि प्रियाणि क्रियन्त एभिरिति प्रियंकरणानि । 'आढ्यसुभग—' इत्यादिना ख्युन्प्रत्यये मुमागमः । काकतीयवृषा काकतीन्द्रः । **भवता खलु पितृमानिति** ॥ कारणगुणानां कार्ये संक्रान्तिरुचितैवेति भावः । नक्तं च दिवा च नक्तंदिवम् । 'अचतुर—' इत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वसमासो निपात्यते । कल्याणानि शुभनिमित्तानि उन्मिषन्त्युद्भवन्ति । प्रदुहते । दुहतेः कर्मकर्तरि तङ् । 'न दुह—' इति यक्प्रतिषेधः । प्रघाणो बहिर्द्वारप्रकोष्ठकः । 'अगारैकदेशे

**राजा**—(सविमर्शाश्चर्यममात्यान् प्रति)—अहो शैशवेऽप्युचितकारित्वं वत्सस्य वीररुद्रस्य। यदस्मदनुरोधार्थमिमानमात्यान् निवर्त्य स्वयमेव जिगीषुः प्रस्थितः।

**मन्त्रिणः**—(सबहुमानं) महाराज! भवता खलु पितृमान् कुमारः।

**पुरोधसः**—विजयप्रस्थानात्प्रभृति नक्तंदिवमुन्मिषन्ति कल्याणानि। तद्विजिता एव दिशो राजपुत्रेण।

**राजा**—भवतामाशिष एव काकतीयकुलश्रेयांसि स्वयं प्रदुहते।

**परिजनः**—*काअईअकुलस्स किं णु ण संपुण्णं पुण्णेण, जस्सिं अवइण्णो भुवणेक्कभद्दो पआवरुद्दो।

**राजा**—(सौत्सुक्यं) कथं चिरयति वत्सस्य विजययात्राश्रवणमहोत्सवः?

**अमात्यपुत्रः**—(सविनयसंभ्रममुपसृत्य सप्रणामं देव मध्यमलोकपाल! युवराजप्रेषितौ विजयवार्ताहारिणौ प्रघाणप्राङ्गणमधिवसतः।

**एष संचिन्त्यमानार्थप्राप्तिरूपः क्रमः।**

(सर्वे सहर्षातिशयं निरूपयन्ति।)

---

*काकतीयकुलस्य किं नु न संपूर्णं पुण्येन, यस्मिन्नवतीर्णो भुवनैकभद्रः प्रतापरुद्रः।

---

प्रघणः प्रघाणश्च' इति निपातितः। तत्प्राङ्गणमधिवसतः। 'उपान्वध्याङ्वसः' इति कर्मत्वम्। भूरि सुवर्णम्, तत्र नियुक्तो भौरिकः कनकाध्यक्षः। नीराजना नाम राष्ट्रसमृद्धये शरत्कालकर्तव्यः शान्तिकर्मविशेषः। स च गजप्राधान्येनाश्वप्राधान्येन च द्विविधः। तदुक्तं **शौनकेन**—'नवम्यामाश्वयुङ्मासे कार्त्तिकायामथापि वा। हस्तिनीराजनं कुर्याद्राजा जनसमृद्धये॥ अश्वनीराजनं कुर्यादश्वानां हितकाम्यया। तद्वच्चैवाश्वायुङ्मासे पूर्वपक्षे नृपोत्तमः॥' इति। तत्र द्वितीयं प्रत्याह—**वाजिनीराजनेति**॥ वीतिहोत्रस्य हुतभुजः। **यात्रेति**॥ महेषूत्सवेषु। अहं प्रथमोऽहं प्रथम इति यस्यां क्रियायामसावहंप्रथमिका। मयूरव्यंसकादित्वात् समासः। स्वार्थे कप्रत्ययः। स्वविभुतां निजव्यापकत्वम्। अत्रानुपहितदिग्गतं विभुत्वं चोपहितास्वपि प्राच्यादिषूपचर्यते। अत्र सेनारजोव्याप्तिनिमित्तस्य दिशामदर्शनस्य भयनिमित्तपलायनहेतुकत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः। **उद्वेल्लदिति**॥ परितो धाटीषु 'शत्रुदेशावमर्दाय सद्यः सुभटघोटकैः। विजिगीषोः प्रवृत्तिर्या सा धाटीति निगद्यते॥' इत्युक्तलक्षणात्। आटोपपटीयसीषु संरम्भपटुतरासु, सर्वतोमुखसंभ्रमास्वित्यर्थः। इति विस्मितमित्यन्वयः।

**मन्त्रिणः**—भद्र! शीघ्रं प्रवेशय।

**अमात्यपुत्रः**—यदादिशन्ति महामन्त्रिणः।

(इति निष्क्रम्य सह ताभ्यां पुनः प्रविष्टः।)

**पुरुषौ**—(प्रणमन्तावुपसृत्य) देव! विश्वैकविजयिना पुत्रेण वर्धसे। बाढमप्रमेयमहिमा प्रतापरुद्रभुजस्थेमा, यच्छैशवेऽप्यतिशयिततरुणकाकतीयपराक्रमस्तस्य विक्रमः।

**राजा**—(सहर्षातिशयममात्यानवलोक्य) मनोरथाभ्यामिव चिन्तितोपगताभ्यां महार्घं पारितोषिकं प्रतिपाद्यताम्। द्विगुणीकृतहर्षयोरनयोर्मुखाद्वृत्तस्य विजयलक्ष्मीपरिग्रहवृत्तान्तश्रवणमहोत्सवेन चरितार्थयामः श्रोत्रवृत्तिम्।

**मन्त्रिणः**---यदाज्ञापयति देवः। (इति भौरिकमुखात् तथा कुर्वन्ति)

**एष सामदानाचरणरूपः संग्रहः।**

(पुरुषौ सप्रणामं गृहीत्वा मूर्ध्नि निधाय महाराजप्रसादमभिनन्दतः।)

**मन्त्रिणः**---भद्रावित एत्य युवराजविजयविहृतयः पराक्रमपल्लविता महाराजसदसः कर्णपूरीक्रियन्ताम्।

**पुरुषौ**---सावधानमवधारयतु महाराजः।

**प्रथमः**---देव! देवस्य प्रसादेन वाजिनीराजनासमिध्यमानस्य वीतिहोत्रस्य विजयप्रदानेन द्विगुणितोदग्रप्रतापे प्रतापरुद्रे प्रतिष्ठमाने,

यात्रारम्भमहेष्वहंप्रथमिकानिर्यच्चमूडम्बर-
क्षुण्णक्षोणितलोत्थितेऽतिबहुले पांसौ वियद्व्यापिनि।
जेतव्याः सकला दिशः स्वविभुतामन्तः पिधायाधिक-
त्रासात् क्वापि पलायिता इव दृशां नैवाभवन् गोचराः॥ ४॥

---

उद्वेलार्णवकोलाहलकल्पान्तपटहप्रणादकल्पयोश्चमूसंरम्भदुन्दुभिगर्जितयोरभूतपूर्वयोरनुभवादद्भुतमभूदित्यर्थः। अथ सैनिकाभिनिवेशदर्शनानन्तरम्। दिगीशैरिन्द्रादिभिरपि त्रस्तं किमुतान्यैरन्तरालवर्तिभिरिति भावः। उभयत्र भावे क्तः। मघोनः इन्द्रस्येमां माघवनीं दिशं प्राचीम्। सैन्यरजसा सूर्ये तिरोहिते सत्युत्प्रेक्ष्यते—**रथेनेति**॥ मामर्कमयं वीररुद्रो न मृष्यते न सहते, परिपन्थिबुद्ध्येति भावः। पौरस्त्यान् प्राच्यान्। सर्वान् पथो व्याप्नुवता सर्वपथीनेन। **युद्धायेति**॥ माद्यद्द्विपानां घटाः

अनन्तरं च—

उद्वेल्लच्चतुरर्णवीकलकलो नायं चमूडम्बरो
नेदं दुन्दुभिगर्जितं त्रिपुरजित्कल्पान्तढक्कारवः ।
इत्याटोपपटीयसीषु परितो धाटीषु भारानम-
च्छेषाशेषफणासु विस्मितमथ त्रस्तं दिगीशैरपि ॥ ५ ॥

**पुरोधसः**---अहो निरङ्कुशमोजायितमन्ध्रचमूपतीनाम् ।

**द्वितीयः**---अथ युवराजाज्ञया प्रथमं माघवनीं दिशं प्रचलितानि सैन्यानि ।

रथेनाभिमुखायातं वीररुद्रो विलोक्य माम् ।
मृष्यते नायमित्यर्कः सैन्यरेणौ तिरोहितः ॥ ६ ॥

**मन्त्रिणः**— ततस्ततः ।

**द्वितीयः**---अनन्तरं सेनाग्रगैरेव पौरस्त्यान् क्षुद्रक्षत्रियान्निर्जित्य सर्वंपथीनेनाटोपेन पटीयसि तस्मिन् महति बले प्रचलति,

युद्धाय समनह्यन्त कलिङ्गाः स्फुटपौरुषाः ।
माद्यद्द्विपघटोद्दामसंभ्रमाडम्बरोद्धताः ॥ ७ ॥

तैः सार्धमन्ध्रचमूपतीनां पराक्रमधने महत्यायोधने,

पीत्वा मांसोपदंशं द्विरदगलगलद्रक्तमैरेयधारां
मत्तो मस्तिष्कलग्नैर्दलितनृपवपुःकीकसैः सृष्टदंष्ट्रः ।
बिभ्रद्रौद्रान्त्रमालां जनितजनभयो भैरवाकारघोरः
संग्रामोर्व्याः कलिङ्गैर्बलिविधिमकरोद्वीररुद्रस्य खड्गः ॥ ८ ॥

---

संग्रामादौ सज्जनानि । 'करिणां घटना घटा' इत्यमरः । तासामुद्दामसंभ्रमेणाधिकाटोपे आडम्बरेण संग्रामपटहप्रणादेनोद्धताः । युद्धे वीररुद्रखड्गस्य कालभैरवसमाधिमाह—**पीत्वेति**॥ मांसेनोपदश्य मांसोपदंशं, मांसमुपदंशं कृत्वेत्यर्थः। 'उपदंशस्तृतीयायाम्' इति णमुल्प्रत्ययः। मांसस्य दंशनक्रियाकर्मत्वेऽपि पानक्रियाकरणत्वात् तृतीयोपपदत्वम् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति विकल्पादुपपदसमासः । मस्तिष्कं नाम मस्तकस्थितो गोर्दापरपर्यायो मेदोविशेषः । तल्लग्नैः कीकसैरस्थिभिः सृष्टदंष्ट्रः । **छिन्नेति** ॥ प्रतिभयेन भयंकरेण मुकुटाटोपेन संजातया राहुभ्रान्त्या भ्रश्यतः क्लिश्य-

**पुरोधसः**—मानुषवेषतिरोहितेनापि काकतीयविष्णुना किंचिदाविष्कृतो निजप्रभावः ।

**मन्त्रिणः**—(सहर्षातिशयाद्भुतं) अहो पराक्रमातिभूमिः प्रतापरुद्रस्य ।

**परिजनः**—*सरिसं खु एदं, जं महाराअरुद्दणरेसरणंदणेण कादव्वं, जं काअइकुलप्पसवाणं खमं, जं कुलदेवदाए सअंभूदेवस्स प्पसत्तिविसेसाणं जुत्तं, तं खु किअं जुवराएण ।

**राजा**—(सप्रमोदगद्गदं) ततस्ततः ।

**प्रथमः**—अनन्तरम्-

छिन्नोद्यद्वैरिवीरप्रतिभयमुकुटाटोपसंजातराहु-
भ्रान्तिभ्रश्यत्पतङ्गाभयकरपृतनारेणुबद्धान्धकारा ।
आसीत् संग्रामवेला विहरदसिलतोद्भिन्नमत्तेभकुम्भ-
प्रोद्यन्मुक्तौघतारानिकरपरिवृतस्वर्वधूवक्त्रचन्द्रा ॥ ९ ॥

अनन्तरं युवराजाज्ञया

वृत्राराातिदिगन्तरालविजयप्रख्यातविक्रान्तयः
पारेपूर्वपयोधि कल्पितजयस्तम्भाः स्फुरत्तेजसः ।
वेलाकाननवासिगीतविभवं देवस्य दोर्विक्रमं
शृण्वन्तो मुहुरन्ध्रसैन्यपतयः प्राप्ता दिशं दक्षिणाम् ॥ १० ॥

---

* सदृशं खल्वेतत्—यन्महाराजरुद्रनरेश्वरनन्दनेन कर्तव्यं, यत् काकतिकुल-प्रसवानां क्षमं, यत् कुलदेवतायाः स्वयंभूदेवस्य प्रसत्तिविशेषाणां युक्तं, तत् खलु कृतं युवराजेन ।

---

मानस्य पतङ्गस्य सूर्यस्याभयकरणेनाभयसाधनेन। मुकुटाच्छादकतया राहुभ्रान्ति-निवर्तकत्वेनेति भावः। चमूरेणुना बद्धान्धकारा। अत एव संग्रामवेलायां रात्रित्वं प्रतीयते। तत्र इभकुम्भनिर्गताः मुक्ता एव ताराः। अप्सरोमुखमेव चन्द्रोऽभूदित्याह—**विहरदिति** ॥ **वृत्रेति** ॥ वृत्राराातिरिन्द्रः। तस्य दिक् प्राची। पारं पूर्वपयोधेः पारेपूर्वपयोधि। 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः। **मुनाविति** ॥ लोपामुद्रा-सुहृदि मुनावगस्त्ये निकटस्थे समीपस्थेऽपि। अगस्त्योदये नद्यो निर्मला भवन्ति। तदुक्तं **वराहसंहितायाम्**—'उदये च मुनेरगस्त्यनाम्नः कुसमायोगमलप्रदूषितानि। हृदयानि सतामिव स्वभावात् पुनरम्बूनि भवन्ति निर्मलानि॥' इति। तथापि कालुष्य-

तत्र च

मुनौ लोपामुद्रासुहृदि निकटस्थेऽपि महता
भवन्त्येता नद्यः कलुषपयसः सैन्यरजसा ।
इतीव व्योमाग्रे मलयपवनान्दोलितशिखाः
पताकाः सोत्प्रासाः प्रतिपदमनृत्यन्नतितराम् ॥ ११ ॥

अनन्तरं पाण्ड्यप्रमुखान् दाक्षिणात्यान् क्षितीश्वरान् शरणमुपगतान् काकतीयवीररुद्रः खचमूपतिनिर्विशेषं संभाव्य तैः सह प्रतीचीं दिशं प्रचलितः ।

**मन्त्रिणः**—साधु साधु समाचरितमात्मनीनं पाण्ड्यैर्यत् पूर्वमेव देवस्य चरणमूलं प्राप्ताः । ततस्ततः ।

**द्वितीयः**—तत्र च

पाश्चात्त्यानां ध्वजेषु स्थितमधिकभरस्रस्तदण्डेषु गृध्र-
व्रातैर्यच्चण्डतुण्डाहतिविहतपटेष्वाहतक्षिप्तपक्षैः ।
अस्त्रं गारुत्मतं तत् समजनि विजयप्रार्थिनामन्ध्रसैन्य-
प्रष्ठानां जन्यमन्यन्निजनिबिडभुजादण्डकण्डूविडम्बः ॥ १२ ॥

अनन्तरं—

जित्वा प्रतीचीमथ वीररुद्रः प्रत्यर्थिनारीनयनाम्बुपूर्णाम् ।
रेवां समुत्तीर्य गजानुबद्धसेतुं विजेतुं गतवानुदीचीम् ॥ १३ ॥

तत्राङ्गवङ्गकलिङ्गमालवप्रभृतयः सर्वे भूपाला मिलित्वा युद्धाय बद्धादराः पुरतः प्रादुरभवन् ।

---

मिति विरोधद्योतकोऽपिशब्दः । सोत्प्रासाः सोपहासाः । लोके कश्चित् प्रबलं कंचन विजित्य सोपहासमुन्नतस्थले चलच्छिखो नरीनर्ति, तद्वदिति भावः । **साध्विति** ॥ आत्मने हितमात्मनीनम् । 'आत्मन्विश्वजन—' इत्यादिना खप्रत्ययः । **पाश्चात्त्यानामिति** ॥ पश्चाद्भवाः पाश्चात्त्याः । 'दक्षिणापश्चात्पुरसस्त्यक्' । तेषां ध्वजेषु गृध्रव्रातैः स्थितमिति यत् तदेव गारुत्मतमस्त्रं समजनि । युद्धात् पूर्वं गृध्रैरेव तत्फलं कृतमिति भावः । तदुक्तं **वराहसंहितायाम्**—'क्रव्यादकौशिककपोतककाककङ्कैः केतुस्थितैर्महदुशन्ति भयं नृपस्य ।' इति । अत्र 'क्रव्यादा गृध्रादयः इति' **तद्व्याख्यातोत्पलपरिमलकारः**। तर्हि पुनर्युद्धस्य किं फलमत आह—**विजयेति** ॥ प्रष्ठानामग्रगामिनाम् । 'प्रष्ठोऽग्रगामिनि' इति निपात्यते । जन्यं युद्धम् । कण्डूविडम्बः कण्डूयापनयनम् । **जित्वेति** ॥

**मन्त्रिणः**—अहो परमनात्मवेदितोदीच्यानां यत्प्रतापरुद्रस्यापि परिपन्थिनो भवन्ति।

**राजा**—ततस्ततः।

**प्रथमः**—अनन्तरं सममनीकिनीभिरापतन्तीभिः राजकानि विलोक्य सगर्वमेवमुक्तं सेनापतिभिः—

रे रे घूर्जर जर्जरोऽसि समरे लम्पाक! किं कम्पसे
वङ्ग! त्वङ्गसि किं मुधा बलरजःकाणोऽसि किं कोङ्कण!।
प्राणत्राणपरायणो भव महाराष्ट्रापराष्ट्रोऽस्यमी
योद्धारो वयमित्यरीनभिभवन्त्यन्ध्रक्षमाभृद्भटाः* ॥ १४ ॥

**एतद्रोषसंरब्धवचनरूपं तोटकम्।**

**परिजनः**—**साहु साहु चमूवईणं वअणं। एव्वं फणिआ उण कीरिसं उवक्कंदं तेहिं।

**प्रथमः**—किं कथ्यते? सैनिकानां निरुपमः पराक्रमः।

यस्तत्राभवदाहवस्तमखिलं जानाति भागीरथी
याऽत्याक्षीत् सुरभूयकारणनिजाहंकारमुच्छृङ्खलम्।
आराद्वीक्ष्य समग्रमन्ध्रसुभटप्रोद्घूर्णखड्गावली-
धारातीर्थमुपेत्य दिव्यनगरीमारोहतो भूपतीन् ॥ १५ ॥

---

* 'वयमन्ध्रनाथसुभटाः प्रत्यर्थिदावानलाः' इति पाठान्तरम्॥

** साधु साधु चमूपतीनां वचनम्। एतत् भणित्वा पुनः कीदृशमुपक्रान्तं तैः।

---

क्त्वाप्रत्ययेनैवानन्तर्ये सिद्धे अथशब्दो विलम्बाभावसूचनार्थः। नयनाम्बुपूर्णां दुस्तरामित्यर्थः। तरणोपायमाह—**गजानुबद्धसेतुमिति**॥ रेवां नर्मदाम्। सममनीकिनीभिः सेनाभिः सह। राजकानि राजसमूहान्। 'गोत्रोक्ष—' इत्यादिना वुञ्प्रत्ययः। **रे रे इति**॥ व्याख्यातं नायकप्रकरणे। **रोषसंरब्धवचनरूपमिति**॥ रोषसंबाधसंभ्रमवचनरूपमित्यर्थः। स्वात्मनि तनुत्यजामन्ते स्वयमेव दिव्यत्वं संपादयामीति स्वर्गङ्गाया योऽयं महानहंकारस्तन्निवारकोऽयं महाहवस्तदतिशायिमहिमेत्यनुपमः सैनिकपराक्रम इत्याह—**यस्तत्रेति**॥ सुराणां भावः सुरभूयम्। 'भुवो भावे' इति क्यप्। अत्याक्षीत् त्यक्तवती। आरात् समीपे। भयेन प्रच्छन्नवृत्तीन् पार्थिवान् प्रच्छन्नमार्गेणैवासाधयन्नित्याह—**अनन्तरमिति**॥ **जीवग्राहं गृहीत्वेति**॥ जीवतीति जीवः। इगुपधलक्षणः कप्रत्ययः। जीवन्तं गृहीत्वेत्यर्थः। 'न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम्। न भीतं न परावृत्तं सतां धर्ममनुस्मरन्॥' इति भीतवधे **मनुना** निषेधस्मरणादिति भावः। 'समूल—' इत्यादिना

अनन्तरं तत्र तत्र प्रलीनात्मनः प्रतिपक्षभूपालानन्वेष्टुकामास्त्रिलिङ्ग-सैनिकास्तत्तद्देशवेषभाषादिकमाविष्कुर्वाणाः सर्वतः पर्यटन्ति स्म। जीवग्राहं गृहीत्वा समानयन्ति स्म युवराजान्तिकम्।

**मन्त्रिणः**—साधीयान् खलु सैनिकानामुद्यमः।

**एतत् प्रकृतोपयोगित्वेन वञ्चनादधिबलम्।**

**राजा**—ततस्ततः।

**द्वितीयः**—अनन्तरं नरपतयो निजपरिजनेष्वप्यकृतविश्वासाः प्रताप-रुद्रस्य पादमूलमेव शरणमुपगताः।

**परिजनः**—*अहो णरवईणं जुज्झकाअरत्तणं।

**एष भयप्रतिपादनादुद्वेगः।**

**प्रथमः**—किमुच्यते कातर्यमिति।

अङ्गाः संगरभीरवः समभवंश्चोलाः पलायाकुलाः †
काश्मीराः स्मरणीयविक्रमकथा हूणा निरीणश्रियः।
लम्पाका भयकम्पमानवपुषो वङ्गा निरङ्गीकृता
नेपालाः परिपालनव्यसनिनः सुह्माश्च नीरंहसः॥ १६॥

अपि च

काम्भोजाः क्षतकुम्भिनीपरिचयाः प्राप्तव्रणाः सेवणाः
गौडाः पीडितविग्रहाः श्रितकुलग्रावाङ्कणाः कोङ्कणाः।
लाटाः पाटितमूर्तयः परिलस(गल)द्वीविह्वलाः सिंहलाः
कर्णाटाः परिपूर्णवेपथुभृतस्तन्द्रालवो मालवाः॥ १७॥

---

* अहो नरपतीनां युद्धकातरत्वम्।
† 'प्रलापाकुलाः' इति पाठान्तरम्॥

---

णमुल्प्रत्ययः। कषादित्वाद् अनुप्रयोगः। इष्टजनातिसन्धानमधिबललक्षणम्। तत्रेष्टं प्रकृतोपयोगि जनातिसंधानं वञ्चनमित्येवमर्थं मत्वा योजयति—**एतदिति**॥ प्रकृतोपयोगि छद्माचरणमात्रमभूताहरणम्। तेन परवञ्चनमधिबलमित्यनयोर्भेद इति द्रष्टव्यम्। **एष इति**॥ **भयप्रतिपादनादिति**॥ अपकारिकृतभयप्रतिपादना-दित्यर्थः। कातर्यमेव राज्ञां श्लोकत्रयेणाह—**अङ्गा इत्यादिना**॥ पलायः पलायनम्।

किं च

भोजा व्यर्थभुजायुधाः क्षतनिजश्रीकेलयः केरलाः
पाण्ड्याः खण्डितविक्रमाः प्रकटितह्रीजर्जरा घूर्जराः ।
पाञ्चालाः प्रणतिप्रपञ्चितभियश्चाटूत्कटाः कीकटाः
काम्पिल्याः श्रितपल्लयः कृतयशोभङ्गाः कलिङ्गा अपि ॥ १८ ॥

(सर्वे हर्षातिशयं नाटयन्ति ।)

**परिजनः**—(साश्चर्यं)*अहो वीररुद्दस्स अइसइदतिहुवणाइ जुज्झावदाणाइ ।

**राजा**—(सहर्षं) महतीं प्रतिष्ठामारोपितं खलु काकतीयकुलं विश्वैकविजयिना वत्सेन ।

**पुरोधसः**—आमूलचूडं फलिताः प्रसत्तयः काकतीयान्वयदेवतानाम् ।

**राजा**— ततस्ततः ।

**प्रथमः**— अनन्तरं सकलदिग्विजयसमुत्तेजिततेजोविलासः सर्वनरेश्वराणां तानि तान्युपायनानि स्वीकृत्य समग्रसैन्यैः सपक्षैर्महीभृद्गणैराश्रितेन महता बलार्णवेन न्यवर्तत विश्वैकवीरो वीररुद्रः ।

**मन्त्रिणः**— (सहर्षं) कुत्रेदानीं राजपुत्रः ?

**द्वितीयः**—साम्प्रतं किंकुर्वाणराजलोकः सर्वानपि सेनापतीन् नगरं प्रस्थाप्य कतिपयमौलपरिवृतः काकतीयवीरः स्वैरं गोदावरीपरिसरारण्येषु मृगयाकुतूहली विहरते ।

**मन्त्रिणः**— (सविमर्शं) महाराज ! नूनं त्वय्येव शासति वसुमतीं यौवराज्यमेव बहुमन्यते राजपुत्रः ।

---

* अहो वीररुद्रस्यातिशयितत्रिभुवनानि युद्धापदानानि ।

---

तत्राकुलाः । 'उपसर्गस्यायतौ' इति लत्वम् । निरीणश्रियो गतसंपदः । रीणातेर्ल्वादित्वान्निष्ठानत्वम् । निरङ्गीकृताः निरवयवीकृताः । नीरंहसो निर्वेगाः । **काम्भोजा इति ॥** कुम्भिनी भूमिः । तन्द्रालवोऽलसाः, निरुद्योगा इत्यर्थः । 'स्पृहिगृहि—' इत्यादिना आलुच्प्रत्ययः । **भोजा इति ॥** चाटूनि त्रायस्वेत्यादीनि प्रियवाक्यानि, तैरुत्कटाः । श्रितपल्लयः प्राप्ताल्पग्रामाः । आमूलचूडमामूलाग्रम् । किंकुर्वाणराजलोकः किङ्करीभवद्राजवर्गः । मौलं मूलबलम् । **एषा प्राप्त्याशेति ॥** राज्याभिषेकस्य मृगयालक्षणप्रतिबन्धकोपनिपातेन शङ्क्यमानत्वादिति भावः । पताकां योजयति—**दिग्विजयेति ॥**

एषा प्राप्त्याशा। दिग्विजयाकृष्टनरेश्वरवृत्तान्तस्य व्यापित्वात् पताका निरूपिता।

राजा--तदचिरमेव युष्माभिरानेतव्यो वत्सः, अनुनेतव्यश्च राज्याभिषेकाय।

मन्त्रिणः—यदाज्ञापयति देवः। (इति निष्क्रान्ताः।)

नेपथ्ये—(ससंभ्रमं) भो भो नागरिकाः! सत्वरमपसरत दूरम्। यदिदानीम्-

आलानं तरसा निपात्य निगलान्युच्छिद्य धूताङ्कुशो
वेगोत्पातितधूर्गतः कटतटीनिर्यन्मदाम्बुस्रुतिः।
भ्रश्यत्पण्यपथं चलद्रजहयं बिभ्यज्जनौघं पुरं
विष्वग्व्याकुलयत्यमन्दरभसः स्वैरं करिग्रामणीः॥ १९॥

एष शङ्कात्रासरूपः संभ्रमः।

राजा---(आकर्ण्य सस्मितं) कथं व्याकुलयति कटकं करीन्द्रः।

पुरुषः—महाराज! नूनमिदानीं नगरं प्रविशतां नरेश्वरोपायनानां द्विपानां गन्धानिलाय संक्रुध्यन् निरर्गलो जातः प्रधानहस्ती।

पुरोधसः—

पित्रा स्वयंभूपतिनोपदिष्टं प्रतापरुद्रस्य महाभिषेकम्।
निर्विघ्नमापादयितुं गजास्यः करेणुराजाकृतिरभ्युपैति॥ २०॥

एष गर्भबीजोद्भेदनादाक्षेपः।

राजा—(सहर्षं) तर्हि वयमपि प्रमदवनद्वारप्रासादमारुह्य गजेन्द्रमवलोकयिष्यामः। (इत्युत्थाय परिक्रम्य निष्क्रान्ताः सर्वे।)

॥ इति वीररुद्रविजयो नाम तृतीयोऽङ्कः॥

---

आलानमिति॥ आलानं बन्धस्तम्भः। निगलानि शृङ्खलानि। पातितधूर्गतः पातिताधोरणः। करिग्रामणीः राजप्रियो गणपतिर्नाम गजश्रेष्ठः। भ्रश्यत्पण्यपथमित्यादौ शङ्कात्रासयोर्निरूपणात् संभ्रम इत्याह—एष इति॥ कटकं नगरम्। पित्रेति॥ गजास्यो गणेशः। अत्रेष्टार्थस्य महाभिषेकस्य निर्विघ्नमित्यनेन गणेशप्रसादरूपोपायानुसरणादाक्षेपः। 'इष्टार्थोपायानुसरणमाक्षेपः' इति लक्षणात्। अत एवात्र गर्भबीजोद्भेदनादित्याह। तस्य प्राप्त्याशासंबन्धित्वेनैवंविधत्वादिति। अन्तःपुरोचितं राज्ञो वनं प्रमदवनम्। 'ङ्यापोः—' इति ह्रस्वः॥

॥ इति तृतीयोऽङ्कः॥

## ॥ अथ चतुर्थोऽङ्कः ॥

(ततः प्रविशति धात्री चेटी च ।)

**धात्री**—(सरोषं) *हंजे एआरिससहस्सकज्जपज्जाउले राअउलमहूसवे वि सअला वि रअणी केण सम तुए णीदा । ईरिसमहग्घाइ भूसणाइ कुदो चोरिआइ । कहं ण विण्णादं तुए दासीएउत्तीए—सअला दिसो जेऊण चउरंतसामंतपरिवारो पआवरुद्दो णअरं पविट्ठो । कुंलदेवदाए पसत्तीए महाराअस्स अण्णाए पुरोहिदाणं अणुरोहेण अमच्चाणं अणुवट्टणेण पआणं भाअहेएण खोणीए तवोविसेसेण अंहारिसस्स परिअणस्स सुकअपरिपाएण अब्भुपगअमहारज्जाहिसेओ जुवराओ संजाओ । एव्वं वि एआइणिं मं महूसवाउलिअं मोत्तूण कहिं ठिदा ।

**अनेन रोषवशान्नियताप्तिप्रदर्शनमुखेन बीजस्यावमर्शाद्विमर्शसन्धिः । चेटीगतदोषप्रख्यापनादपवादोऽङ्गम् ।**

**चेटी**—**सामिणि ! अवराहं सहस्स । (इति पादयोः पतति ।)

**धात्री**—(सभ्रूभङ्गं) †दासीएउत्ति, पटंचलेण सप्पदंसणं पडिमज्जेसि जं पणामेण ईरिसापराहं सिढिलेसि ।

---

* हञ्जे एतादृशसहस्रकार्यपर्याकुले राजकुलमहोत्सवेऽपि सकलाऽपि रजनी केन समं त्वया नीता ? ईदृशमहार्घाणि भूषणानि कुतश्चोरितानि ? कथं न विज्ञातं त्वया दास्याःपुत्र्या—सकला दिशो जित्वा चतुरन्तसामन्तपरिवारः प्रतापरुद्रो नगरं प्रविष्टः । कुलदेवतायाः प्रसत्त्या महाराजस्याज्ञया पुरोहितानामनुरोधेनामात्यानामनुवर्तनेन प्रजानां भागधेयेन क्षोण्यास्तपोविशेषेणास्मादृशस्य परिजनस्य सुकृतपरिपाकेणाभ्युपगतमहाराज्याभिषेको युवराजः संजातः । एवमप्येकाकिनीं मां महोत्सवाकुलितां मुक्त्वा कुत्र स्थिता ?

** स्वामिनि ! अपराधं सहस्व ।

† दास्याःपुत्रि ! पटाञ्चलेन सर्पदंशनं परिमार्जयसि-यत्प्रणामेनेदृशापराधं शिथिलयसि ।

---

नीचपात्रद्वययुक्तं प्रवेशकं प्रारभते—तत इति ॥ तत्र प्रतीहारप्रवेशात् पूर्वः कथाभागः पूर्वाङ्कशेषतया वृत्तः । उत्तरस्तूत्तराङ्कशेषतया वर्तिष्यमाण इति द्रष्टव्यम् । हञ्जे चेटि । 'हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । ईरिसेति ॥ महार्घाणि महामूल्यानि । दास्याःपुत्र्या । 'पुत्रेऽन्यतरस्याम्' इति विकल्पादलुक् । विमर्शसंधिं योजयति—अनेनेति ॥ अनेन ग्रन्थसंदर्भेणेत्यर्थः । प्रतिपक्षनिवृत्त्या

एष रोषसंभाषणरूपः संफेटः ।

चेटी—*ईरिससहावा एव्व तुमं । ता णिक्कारणकोविणिं होदिं अणुवट्टिउं अहं ण पज्जत्ता ।

धात्री—(सरोषशिरःकम्पं) **वक्कसीलदुल्ललिए ! लूणकण्णासिअं तुमं बन्धिऊण कारावरभाअणं करेमि ।

( इति बाहुबन्धनं नाटयति । )

एष बन्धनरूपो विद्रवः ।

चेटी—(सभयकम्पं) †सामिणि ! रक्खेहि रक्खेहि असरणं णिरवराह इमं जणं । तुह अत्तिआए हिडिंबस्समं गच्छंतीए अहं बलक्कारेण णीदा । तह्न पडिऊलं देव्वं पसादअंतीए विलंबिदं । किं करेमि ।

धात्री—(सरोषहुङ्कारं) ††एआरिसं राअउलमहूसवं उज्झिअ हिडिंबालअ-गंडसेलेसु किं त्ति मत्तअं ताडिस्सइ मंदभाइणी ?

एष गुरुतिरस्कृतिरूपो द्रवः ।

चेटी—°सामिणि ! सहेहि विलंबिअं । तुए कादव्वं मंगलोवआरं सिग्घं णिव्वट्टेमि । (इति वपुषा प्रणमति । )

---

* ईदृशस्वभावैव त्वम् । तत् निष्कारणकोपिनीं भवतीमनुवर्तितुमहं न पर्याप्ता ।

** वक्रशीलदुर्ललिते ! लूनकर्णनासिकं त्वां बद्ध्वा कारागृहभाजनं करोमि ॥

† स्वामिनि ! रक्ष रक्ष अशरणं निरपराधमिमं जनम् । तवात्तिकया हिडिम्बाश्रमं गच्छन्त्याऽहं बलात्कारेण नीता । तत्र प्रतिकूलं दैवं प्रसादयन्त्या विलम्बितम् । किं करोमि ?

†† एतादृशं राजकुलमहोत्सवमुज्झित्वा हिडिम्बालयगण्डशैलेषु किमिति मस्तकं ताडयिष्यति मन्दभागिनी ।

° स्वामिनि ! सहस्व विलम्बितम् । त्वया कर्तव्यं मङ्गलोपचारं शीघ्रं निर्वर्तयामि ।

---

कार्यनिश्चयो नियताप्तिः । तस्याः प्रदर्शनमुखेन बीजस्य गर्भसंधौ प्रसिद्धस्यावमर्शात् पर्यालोचनात् । तव अत्तिकया ज्येष्ठभगिन्या । 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः । प्रतीहारप्रवरो वृद्धप्रतीहारः । दीपरिञ्छोलिं दीपपङ्क्तिम् ॥ प्रवेशकः ॥ तत इति ॥ दन्तीति ॥ रथाश्वमिति ॥ सेनाङ्गत्वादेकवद्भावः । नागरकुलं पौरसमूहः । स्वैरम् असंबाधेन । संशृणुध्वमिति ॥ संपूर्वाच्छृणोतेरविवक्षितकर्मकात् 'समो

धात्री---(सप्रसादं) *हंजे ! उट्ठेहि उट्ठेहि ।

एषा विरोधशमनरूपा शक्तिः ।

चेटी--(सहर्षमुत्थाय हस्तावलम्बं दत्त्वा) †इदो इदो तत्तहोदी ।

धात्री---(कंचित् परिक्रम्य पुरोऽवलोक्य च) ††कहं एसो पडिहारप्पवरो ससंभमं णिग्गओ । ता पच्चासण्णो विअ महाहिसेअसमओ । तेण राअउत्तस्स मंगळगोराअणादोविरेळ्ळोळिं णिव्वट्टेदुं अब्भंतरं पविसह्म ।

(इति निष्क्रान्ते ।)

प्रवेशकः ।

---

* सखि ! उत्तिष्ठ उत्तिष्ठ ।

† इत इतस्तत्रभवती ।

†† कथमेष प्रतीहारप्रवरः ससंभ्रमं निर्गतः । तत् प्रत्यासन्न इव महाभिषेकसमयः । तेन राजपुत्रस्य मङ्गलगोरोचनादीपरिङ्खोळिं निर्वर्तयितुमभ्यन्तरं प्रविशामः ।

---

गम्यृच्छि—' इत्यादिनाऽऽत्मनेपदम् । काकतिभूपतीनां भूपरिपालनमुदितोदितं भवतीत्याह—पूर्वैरिति ॥ विस्मारितेत्यत्र 'गतिबुद्धि—' इत्यादिनाणि कर्तुः कर्मत्वम् । तस्मिन्नभिधेये कर्मणि क्तः । 'ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । उत्तरोत्करणानि छत्रचामरादीनि । अभ्यर्णमन्तिकम् । उपनीतानि समर्पितानि । लिखितपठितमावाल्याभ्यस्तं, न नूतनं भवतीत्यर्थः । स्नातानुलिप्तादिवत् 'पूर्वकाल—' इति समासः । पटाक्षेपेण नेपथ्यापसरणेन । सूचनं विनैव प्रविश्येत्यर्थः । अभिषेकानन्तरकार्यं सिद्धवत्कृत्याह—अद्येति ॥ राजन्वती सुराज्ञी । 'राजन्वान् सौराज्ये' इति निपातनात् साधुः । वीतोपसर्गा निरुपद्रवाः । विचलनं नाम स्वगुणाविष्करणम् । तत् प्रकृतानुगुण्येन विशिष्य योजयति—एतदिति ॥ राजपुत्रेति ॥ भद्रासनमभिषेकोपयोगी पीठविशेषः । तदुक्तं वास्तुशास्त्रज्ञैः —'श्लक्ष्णं षडङ्गुलोत्सेधं षोडशाङ्गुलविस्तृतम् । *द्वात्रिंशदङ्गुलायामं क्षीरदारुसमुद्भवम् ॥ पद्माङ्कितं भवेद्भद्रपीठं स्नपनकर्मणि ॥' इति । एतत् 'सिंहासनम्' इति वसिष्ठादयो व्यवहरन्ति । प्रत्याययितारो विश्वासयितारः स्वाधीनत्वसंपादका वा । पक्षद्वयेऽपि ग्राह्यत्वाच इत्यर्थः । प्रतिपूर्वादिणो ण्यन्तात् तृच्प्रत्ययः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । सर्वमन्यत् सुगमम् ॥

॥ इति चतुर्थोऽङ्कः ॥

---

* 'द्विद्वादशाङ्गुलायामम्' इति पाठान्तरम् ।

(ततः प्रविशति प्रतीहारः ।)

प्रतीहारः —(साटोपं परिक्रम्य द्वारि नरपतिकुलकलकलमसहमानः सावमानं कनकवेत्रलतामुद्यम्य )

रे रे नरेश्वराः !

दन्तिव्यूहमुपायनीकृतममुं कुर्वन्तु पुर्या बहि-
र्यस्योद्यद्घनबृंहितैर्न घटिकाघण्टाध्वनिः श्रूयते ।
दूरे चास्तु रथाश्वमेतदखिलं यस्यातिसंमर्दतो
निष्क्रामत् प्रविशच्च नागरकुलं न स्वैरमाचेष्टते ॥ १ ॥

एषा तर्जनोद्वेजनरूपा द्युतिः ।

(किंचिदुच्चैः) भो भो कुलामात्यवृद्धाः प्रधानाधिकारिणः परिजनाः पौराश्च संशृणुध्वम् । एषा रुद्रदेवस्याज्ञा । यथा किल—

पूर्वैः काकतिवंशजैर्नृपतिभिः सम्यग्धृता या चिरं
यस्या मानुषशम्भुना गणपतिक्षोणीभुजाऽभूत् प्रथा ।
येयं मद्भुजया कुलाद्रिवसतिं विस्मारिता मेदिनी
सेयं संप्रति वीररुद्रभुजयोर्यातु प्रतिष्ठां स्थिराम् ॥ २ ॥

---

तत इति ॥ ज्योतिर्विदो मौहूर्तिकाः । अत्र पूर्वाङ्कवर्तिभिर्मौहूर्तिकैरसूचितैरेवानुप्रविष्टैरभिहितस्याङ्कार्थस्य पूर्वाङ्कार्थानुगतत्वादङ्कावतरणमित्याह—एतदुत्तरेति ॥ आदेष्टेति ॥ अत्र बीजयुक्तानां मुखसंध्याद्यर्थानां परमप्रयोजनसंबन्धलाभात् निर्वहणसंधिरित्याह—एष इति ॥ स्वप्न इति ॥ आसूत्रितां सूचितामप्याज्ञां पालयन्तमभिनन्दतोऽनुमोदमानस्य शंभोर्विभोर्व्यापकस्याप्यन्तर्मुदो न मान्ति । अप्रमेयो विचित्रो हर्षोऽभूदित्यर्थः । संध्याख्यमङ्गं योजयति—एष इति ॥ उपगमात् पुनरुपगमनादित्यर्थः । कल्याणीति ॥ भूतसरणिः पृथिव्यादिभूतसमूहः । कल्याणी अप्राप्तविकारतया शुभशंसिनीत्यर्थः । श्रेयःप्रसत्रेण श्रेयःसंपादनेन निर्भराः द्विजनुषां द्विजानामाशीर्गिरो जाग्रति नित्यं प्रवर्तन्त इत्यर्थः । ग्रहगणाः सूर्यादयः । उन्नतं पदमुच्चसंज्ञं स्थानम् । तदुक्तं वराहमिहिराचार्यैः—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः' इति । आरूढाः प्राप्ताः । एतत्फलमुक्तं वृद्धवसिष्ठसंहितायाम्—'उत्पातदोषादिविवर्जितेऽह्नि नराधिपानामभिषेक इष्टः । मूलत्रिकोणस्वगृहोच्चमित्रगृहस्थितैर्वाऽथ तदंशसंस्थैः ॥ शुभे विलग्ने सततं ग्रहेन्द्रा

एषा स्ववंशजानां कीर्तनाद् गुरुकीर्तनरूपः प्रसङ्गः ।

(पुनः साटोपं परिक्रम्य) अधिकृताः किमिदानीमारभध्वे । किमुपक्रान्तः स्वयंभूदेवसमाराधनविधिः । कच्चिदत्ताः पुरदेवताभ्यो बलयः ? किमभ्यर्चिताः सर्वे वर्णवृद्धाः ? कच्चित् प्रसाधिता महाभिषेकवेदिः ? किं सज्जीकृतानि कनककलशेषु पुण्यतीर्थसलिलानि ? कच्चिदभ्यर्णमुपनीतान्युत्तमोपकरणानि ? किं मङ्गलमुहूर्ते कृतावधाना ज्योतिर्विदः ? कच्चिदलंकृतास्त्रिलिङ्गनगरीमृगीदृशश्च ? यदिदानीं वसुमतीपाणिग्रहणोचितमङ्गलाचारवेषः प्रतापरुद्रः काकतीयमहाराज्यलक्ष्मीमहान्तःपुरे वर्तते । तत् त्वरध्वम् । (अन्यतो गत्वा सभ्रूक्षेपमवलोक्य) कथं राजानो न विरमन्ति । (किंचिदुपसृत्य) भो भो भूपालाः ! यथावकाशमाध्वम् । सज्जीकुरुध्वमुपायनजातम् । न वृथा संमर्दं सहते मम वेत्रयष्टिः ।

एतदवमानरूपं छलनम् ।

(समन्तादवलोक्य सगर्वातिशयं) अहो ! तृणीकृतजगतां क्षितिभृतामुद्वेलं संमर्दं निवारयतो मम प्रभावः । अथवा काकतीयदौवारिकाणां लिखितपठितमेव राजनिवारणम् ।

एष स्वशक्त्याविष्करणरूपो व्यवसायः ।

(प्रविश्य पटाक्षेपेण दौवारिकः ।)

दौवारिकः—(साक्षेपं) रे केन खलु समयविदा भूपतयो निवारिताः ? महोत्सवदिदृक्षवः सर्वे प्रविशन्तु ।

प्रथमः—(सरोषं) रे काकतीयकुलवृद्धप्रतीहारं मामसमयवेदिनमुदाहरसि ।

---

दिशन्ति लक्ष्मीं विपुलां च कीर्तिम् ॥' इति । मुहूर्तशब्देनात्र षड्वर्गरूपः कालविशेषो विवक्षितः । स च क्रूरसौम्यग्रहसंबन्धवशात् द्विविधः । तदुक्तम्—'लग्नमर्थं तृतीयांशो नवांशो द्वादशांशकः । त्रिंशांशश्चेति षड्वर्गः क्रूरसौम्यवशात् द्विधा ॥' इति । तत्रायं सौम्य इत्याह—श्रेयानिति ॥ शुभैः सौम्यग्रहैः श्रेयान् प्रशस्त इत्यर्थः । तदपि तत्रैवोक्तम्—'षड्वर्गो भवति सदा शुभखचरसमुद्भवः शुभदः । पापसमुत्थस्त्वशुभस्तस्माद् ग्राह्यस्तु सौम्यषड्वर्गः ॥' इति । नक्षत्राणि रोहिण्यादीनि, रोहिण्याद्यन्यतमनक्षत्रमित्यर्थः । एकदा बहूनामसंभवात् । शिवंकराणि क्षेमंकराणि ।

**द्वितीयः**—भवतु यो वा को वा भवान्। प्रवेष्टव्या नरपतय इति महाराजस्याज्ञा।

**एतत् प्रतीहारयोरन्योन्यसंरब्धवचनरूपं विरोधनम्।**

**प्रथमः**---किमनेन समं शुष्ककलहेन। यावत् प्रधानागारद्वारवेदिकामध्यमध्यासीनं पुरोहितपुरस्कृतं युवराजमेवोपसर्पामि।

(इति परिक्रामति।)

**द्वितीयः**---अहमपि यथानिर्दिष्टमनुतिष्ठामि।

(इति परिक्रामति।)

(ततः प्रविशति यथानिर्दिष्टः प्रतापरुद्रः पुरोधसो मन्त्रिणश्च।)

**पुरोधसः**—काकतीयकुलतिलक! युवराजेन भवता लीलयैव दिशो दश विजिता इत्यमी सम्यगद्य सत्याशिषो वयम्। किं च—

अद्यान्वयः काकतिभूपतीनां प्राप्तस्त्रिलोकीप्रथितां प्रतिष्ठाम्।
राजन्वती भूरियमद्य जाता वीतोपसर्गाः सकलाः प्रजाश्च ॥ ३ ॥

**एषा सिद्धवद्भाविश्रेयःकथनात् प्ररोचना।**

**मन्त्रिणः** —

सूर्यसोमान्वयामात्यमहत्ताऽद्याधरीकृता।
अस्माभिरधिकुर्वाणैः काकतीयकुलस्थितम् ॥ ४ ॥

---

यद्यपि 'मेवर्तिभयेषु कृञः' इत्यत्र 'शिवंकरशब्दश्छन्दस्येव, न भाषायाम्' इत्याह **पदमञ्जरीकारः**; तथापि 'क्षेमंकरोऽरिष्टतातिः शिवतातिः शिवंकरः' इत्य**मरकोश**मूलोऽयं प्रयोग इत्यनुसंधेयम्। निमित्तोदयाः दिक्प्रसादादयः। **विप्रैरिति** ॥ मङ्गलसूक्तानि 'कनिक्रदज्जनुषं ममाग्ने वर्चो विहवेष्वस्तु' इत्येवमादीनि। आलोकशब्दा जयजयेत्येवमादयः। 'आलोको वन्दिभाषणे' इति **विश्वः**। भूपा अपि वन्दिश्रमभूमयो बभूवुरिति भावः। उपकरणानि छत्रचामरादीनि। वन्दिजनाः 'वन्द्यभूभृद्गुणोत्कर्षश्रावका वन्दिनः स्मृताः' इत्युक्तलक्षणाः। शुद्धान्तप्रधानागारमन्तःपुरप्रधानगृहम्। पुरा खलु गणपतिमहाराजो यस्मिन् मुहूर्तेऽभिषेकमनुभूय समस्तां भुवमेकातपत्रां बुभुजे एतादृशोऽयं मुहूर्तः संप्राप्तः। अतोऽवधानेन देवताऽऽराधनादिकं कर्तव्यमित्याह—**संनह्यध्वमिति** ॥ संनह्यध्वं मुहूर्ते सावधाना भवतेत्यर्थः। उचितद्रव्याणि तीर्थकलशादीनि। सुरानुपाध्वमर्चयध्वम्। अत्रेदं पित्रादीना-

अथ शृङ्गारस्यालम्बनविभावो यथा—

लावण्यैकखनिर्विधातृरचनाशिल्पप्रतिज्ञावधिः
शृङ्गारप्रतिभूर्विलासविपणिः कन्दर्पघण्टापथः ।
नारीणामधिदेवता च तरुणी सेयं किमन्यैर्गुणै-
रस्या मन्मथमन्मथः प्रियतमः श्रीवीररुद्रो नृपः ॥ १८ ॥

उद्दीपनविभावो यथा—

उरोमात्रोत्सेधं भवदपि विलासैरभिनवै-
मृगाक्ष्यास्तारुण्यं त्रिभुवनमिदं व्याकुलयति ।
स्तनाभोगस्फीतं यदि किल भवेत् का खलु कथा
भवित्री किं वाऽन्यद्विजितमखिलं पुष्पधनुषा ॥ १९ ॥

अनुभावो यथा—

स्मरस्मेरान् मन्दस्मितमधुरसौरभ्यसुभगान्
मनाग्व्रीडाजाड्यान् प्रणयरसकल्लोलभरितान् ।

---

तदुक्तम्—'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति । न द्वितीयः; वैराग्यादिसामग्र्याः सुलभत्वात् । तथाहि — वैराग्यपरमेश्वरानुग्रहप्राचीनकुशलपरिपाकसत्पुरुषसेवावेदान्तविचारादयो-विभावाः । यमनियमादयोऽनुभावाः । 'राज्यधुरोद्वहनादयोऽपि शान्तस्य जनकादेरनुभावाः' इत्युक्तं **लोचने** । मतिस्मृतिचिन्ताधृतिवितर्कादयो व्यभिचारिण इति । न तृतीयः, रागद्वेषकलुषितान्तःकरणानामचर्वणीयत्वेनाश्लाघ्यत्वेऽपि वीतरागाणां तद्भावात् । यदि कतिपयाश्लाघ्यत्वमात्रेण रसत्वात् प्रच्यवेत, तर्हि वीतरागाणामश्लाघ्य इति शृङ्गारोऽपि प्रच्यवताम् । न चतुर्थः, न तावच्छृङ्गारादावन्तर्भावः संभवति । अप्रसक्तत्वात् । ननु दानाद्युपाधिना त्रिविधो वीरः । तदुक्तं **मुनिना**—'दानवीरं युद्धवीरं धर्मवीरं तथैव च । रसं वीरमपि प्राह ब्रह्मा त्रिविधसंमतम् ॥' इति । अयं च धर्मप्रधानो वीर एवेति तत्रैवान्तर्भावः शान्तस्य संभावित इति चेन्न । उत्साहस्याहमेवंविध इत्येवंप्राणत्वेनाभिमानमयो वीरः, सर्वाहंकारप्रशमैकरूपः शान्तः, एवमनयोरत्यन्तवैजात्यात् । तर्हि दयावीरेऽन्तर्भाव इति चेन्न । तस्याप्येवंविधत्वे शान्तस्यैव नामान्तरकरणम्, अनेवंविधत्वे वीरप्रभेद एवेति । एवमप्यन्तर्भावाङ्गीकारे सर्वत्रैकरसस्य प्रसङ्गः । नापि पञ्चमः । चतुर्थपुरुषार्थस्य मुक्तेरेतदेकसाध्यत्वत् । तदुक्तं **भावप्रकाशे**—'सर्वप्रकारैः संपूर्णकामः संतुष्टमानसः । प्राप्नोति मुक्तिं चरमे

कृतानेकस्कन्धान् मनसिजसहस्राणि सृजतः
कटाक्षान् वामाक्षी किरति परितो रुद्रनृपतिम् ॥ २० ॥

॥ सात्त्विकानां स्वरूपोदाहरणानि ॥

अथ सात्त्विकानां स्वरूपमुदाहरणं च ।

**स्तम्भः स्यान्निष्क्रियाङ्गत्वं रागभीत्यादिसंभवम् ।**

यथा —

*काअइपुरेत्थिआओ पेख्खंतीओ णरेंदकंदप्पं ।
मअणसरुक्किण्णाओ विअ ट्ठिआ णिच्चळंगीओ ॥ २१ ॥

**प्रलयः सुखदुःखाद्यैर्गाढमिन्द्रियमूर्च्छनम् ॥ २२ ॥**

यथा—

*जिअमअणरूवसारो सहि एसो वीररुद्दणिवचंदो ।
जं दठ्ठूण णिमज्जइ मुच्छाए इंदिअग्गामो ॥ २३ ॥

**सुखाद्यतिशयाज्जाता रोमाञ्चो रोमविक्रिया ।
रागरोषभयादिभ्यो वेपथुर्गात्रकम्पनम् ॥ २४ ॥**

द्वयोरुदाहरणं यथा—

†दइआलिंगणणिब्भरकंपा अ वहू विओअजिण्णंगी ।
उग्गिरइ अंतरट्ठिदमअणसरे पुलअचम्मेण ॥ २५ ॥

---

* काकतिपुरस्त्रियः पश्यन्त्यो नरेन्द्रकन्दर्पम् ।
मदनशरोत्कीर्णा इव स्थिता निश्चलाङ्ग्यः ॥

** जितमदनरूपसारः सखि एष वीररुद्रनृपचन्द्रः ।
यं दृष्ट्वा निमज्जति मूर्च्छायामिन्द्रियग्रामः ॥

† दयितालिङ्गननिर्भरकम्पा च वधूर्वियोगजीर्णाङ्गी ।
उद्गिरत्यन्तरस्थितमदनशरान् पुलकच्छद्मना ॥

---

शान्तेनैव रसेन सः ॥' इति । लोचने चोक्तम्—' मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः स चायं शान्तरसः' इति । तस्मान्नवैव रसा इति सिद्धम् । वत्सलादिरसान्तराणामन्तर्भावादिकमन्यतो द्रष्टव्यम् । विभावानुभावादीनां प्रतिरसमसाधारणतया यथारसमुदाहर्तुमुचितत्वादादौ शृङ्गारमुदाहरिष्यमाणस्तदालम्ब-

**वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ।**

यथा—

श्रृण्वती प्रियसंदेशं प्रेयसः काकतीशितुः ।
स्मरराज्याभिषिक्तेव स्विन्नाङ्गी वामलोचना ॥ २६ ॥

**विषादमदरोषादेर्वर्णान्यत्वं विवर्णता ॥ २७ ॥**

यथा—

* णरणाह चंदधवले तुज्झ गुणे साहु सह्मरंतीए ।
अंगाइ पांडुराइं एह्णिं जाआइ सामाए ॥ २८ ॥

**अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ।**

यथा—

वीररुद्रनृपाद्भीतं पाण्ड्यं मग्नं पयोनिधौ ।
अन्वेष्टुमिव तद्योषिदश्रुधाराऽऽपगायते ॥ २९ ॥

**मतं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ॥ ३० ॥**

यथा—

† विअणम्मि पिएण समं खामक्खामक्खरं भणंतीए ।
एक्को मुणइ अणंगो अत्थं वहुआए भणिआणं ॥ ३१ ॥

---

* नरनाथ चन्द्रधवलान् तव गुणान् साधु संस्मरन्त्याः ।
अङ्गानि पाण्डुराणि इदानीं जातानि श्यामायाः ॥

† विजने प्रियेण समं क्षामक्षामाक्षरं भणन्त्याः ।
एको जानात्यनङ्गोऽर्थं वध्वा भणितानाम् ॥

---

नमुदाहरति—**लावण्येति** ॥ 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणः कान्तिविशेषो लावण्यम् । तस्य-एकखनिः, कदाचिदपि तन्न क्षीयत इति भावः । रचनाशिल्पमङ्गोपाङ्गसौष्ठवनिर्माणं तद्विषयप्रतिज्ञाया अवधिः । इतः परं विधाता प्रतिज्ञातुमपि न शक्नोति, किमुत विधातुमिति भावः । श्रृङ्गारप्रतिभूः—'स्वामिभृत्याधमर्णानां व्यवस्थापरिकल्पने । अन्यो यः क्रियते शिष्टः प्रतिभूः स निगद्यते ॥' इति **सोमेश्वरो**क्तलक्षणः, यथा प्रतिभूरधमर्णाद्धनमुद्धरति तथेयमपि वैराग्याच्छृङ्गारमिति भावः । विलासानां विपणिः पण्यवीथिका, विलासापेक्षायामत्रैव संपाद्या इति भावः । कन्दर्पस्य घण्टापथो विस्रम्भ-

## ॥ व्यभिचारिभावानां स्वरूपोदाहरणे ॥

अथ व्यभिचारिणां निर्वेदादीनां स्वरूपमुदाहरणं च ।

दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः ।
तत्र चिन्ताश्रुनिःश्वासदीनताः संभवन्ति च ॥ ३२ ॥

यथा—

*सहि कप्पूरेण किअं किं कत्थूरीए मलअजो ठाउ ।
गुणसिसिरं जससुरहिं आणेहि †पआवरुद्दं अ ॥ ३३ ॥

ग्लानिर्बलस्यापचयो वैवर्ण्यारतिकारणम् ।

यथा—

††तेल्लोक्कं वहइ मही तं धरइ भुओ पआवरुद्दस्स ।
तं हिअएण धरंती साहसिई दुब्बलंगि म्हि ॥ ३४ ॥

अथ शङ्का ।

अनिष्टाभ्यागमोत्प्रेक्षा शङ्का रोषादिकारणम् ॥ ३५ ॥

---

* सखि कर्पूरेण कृतं किं कस्तूर्या मलयजस्तिष्ठतु ।
गुणशिशिरं यशःसुरभिमानय प्रतापरुद्रं च ॥

† 'पआवरुद्दणिवचंदं'—प्रतापरुद्रनृपचन्द्रम् इति पाठान्तरम् ।

†† त्रैलोक्यं वहति मही तां धरति भुजः प्रतापरुद्रस्य ।
तं हृदयेन धरन्ती साहसिकी दुर्बलाङ्गयस्मि ॥

---

विहारभूमिरित्यर्थः । सेयं प्रसिद्धा । तरुणी युवतिः । नारीणामधिदेवता च, सर्वगुणाश्रयत्वेनोपास्यत्वादिति भावः । यदाहुः—'गुणाः पूजास्थानम् ......' इति । गुणसामग्रीफलस्य प्रेयसो लाभात् किं गुणान्तरकथनेनेत्याह—**किमन्यैरिति** ॥ अत्र लावण्यादीनामालम्बनगुणानामुद्दीपनविभावत्वेऽप्यालम्बनोपस्कारार्थमेवोपादानान्न तत्प्राधान्यम् । उद्दीपनविभावमुदाहरति—**उर इति** ॥ उरोमात्रे उत्सेध उच्छूनता यस्मिन् वयसि स्तनालवालस्थले किंचिदुन्नतमुर इति प्रतीतिर्जायते तदित्यर्थः । स्तनयोराभोगो विस्तारः । स्फीतं समृद्धम् । 'स्फायः स्फी निष्ठायाम्' इति स्फीभावः । उदयदेव यौवनं जगन्मोहनं जायते, उदितं परिपूर्णं वा किमु वक्तव्यमिति भावः । अनुभावमुदाहरति—**स्मरेति** ॥ व्याख्यातमेतत् प्रसङ्गेन काव्यप्रकरणे । एवं रसान्तरसंबन्धिनो विभावानुभावा यथायोगं स्वस्वरसप्रकरणे द्रष्टव्याः । सात्विकानां सामान्यलक्षणप्रस्तावे बाह्याभ्यन्तरभेदेन द्वैविध्यमुक्तम् । तत्र बाह्यानां

यथा—

*ण मुणदु अण्णो त्ति मए हिअए परिचओ पिअस्स किदो ।
किं पअढ म्हि जणाणं सव्वंगीणेहिं पुलएहिं ॥ ३६ ॥

अथासूया ।

परोत्कर्षासहिष्णुत्वमसूया परिकीर्तिता ।

यथा—

†अहिआईए गुणेहिं रूवेण अ मज्झ किं मही अहिआ ।
जं तं पआवरुद्दो बहुमण्णइ भाअहेअं तं ॥ ३७ ॥

अथ मदः ।

मदिरादिकृतो मोहहर्षव्यतिकरो मदः ॥ ३८ ॥

यथा—

††भणइ अ असंगअत्थं हसइ अमंदं अ राअभरिअच्छी ।

---

* न जानात्वन्य इति मया हृदये परिचयः प्रियस्य कृतः ।
किं प्रकटाऽस्मि जनानां सर्वाङ्गीणैः पुलकैः ॥
† अभिजात्या गुणै रूपेण च मत्तः किं मही अधिका ? ।
यत्तां प्रतापरुद्रो बहुमन्यते भागधेयं तत् ॥
†† भणति चासंगतार्थं हसत्यमन्दं च रागभरिताक्षी ।
प्रियचिन्तामदिरया परवशा पश्यत श्यामाङ्गी ॥

---

स्तम्भादीनां स्वरूपोदाहरणे वक्तुं प्रतिजानीते—अथेति ॥ वक्ति—स्तम्भ इति ॥ विषादविस्मयादिजन्यो जाड्यनिष्कम्पत्वाद्यनुभावो विष्टब्धचेतनतया चेष्टाविघातः स्तम्भ इत्यर्थः । रागसंभवं स्तम्भमुदाहरति—काईति ॥ अत्र पश्यन्त्यो निश्चलाङ्ग्य इत्यनेन सत्यपि चैतन्ये निश्चेष्टत्वकथनात् स्तम्भ इति भावः । प्रलयं लक्षयति—प्रलय इति ॥ सुखमदनिद्राप्रहारादिजन्यं दुःखाभिषङ्गाद्यनुभावं निश्चेतनतया नष्टचेष्टत्वं प्रलय इत्यर्थः । तदुक्तम्—'वाक्कायमनसां प्रायः प्रलयो नष्टचेष्टता' इति । सुखमूलं प्रलयमुदाहरति—जिएति ॥ सर्वाणीन्द्रियाणि स्वस्वव्यापारेभ्य उपरतानीत्यर्थः । अत एव निश्चेतनतया नष्टचेष्टत्वमिति भावः । रोमाञ्चकम्पयोरुदाहरणलाघवार्थं युगपल्लक्षणमाह—सुखेत्यादि ॥ सुखोत्साहभयविस्मयादिजन्यो गात्रसंस्पर्शनोल्लसनाद्यनुभावो रोमोद्गमो रोमाञ्च इत्यर्थः । भयज्वरजरादिजन्यः स्फुरणाद्यनुभावो गात्रकम्पो वेपथुरित्यर्थः । सुखजन्ययो रोमाञ्चकम्पयोरुदाहरणमाह—दइएति ॥ 'दयितालिङ्गननिर्भरकम्पा च वधूर्वियोगजीर्णाङ्गी' । अत एव । 'उद्गिरत्यन्तरस्थित-

पिअचिंतामइराए परवसा उवह सामंगी ॥ ३९ ॥

अथ श्रमः ।

**श्रमः खेदोऽध्वरत्यादेर्जातः स्वेदातिभूमिकृत् ।**

यथा—

*आअच्छइ एव्व पिए कीस करेंती गआगआआसं ।
तम्मसि सेदजलेहिं सुंदरि लुलिअंगराआसि ॥ ४० ॥

अथालस्यम् ।

**मन्दोद्यमत्वमालस्यं कर्तव्येषु प्रकीर्त्यते ॥ ४१ ॥**

यथा—

आस्तां मृगाक्ष्या गृहकृत्यवार्ता स्वाङ्गोपचारेष्वपि यत्नमान्द्यम् ।
कर्तव्यमग्रे दयितस्य यत् स्यान्नूनं बलात्कारयति स्मरस्तत् ॥ ४२ ॥

अथ दैन्यम् ।

**सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसंभवम् ।**

---

* आगच्छत्येव प्रिये कस्मात्कुर्वती गतागतायासम् ।
ताम्यसि स्वेदजलैः सुन्दरि लुलिताङ्गरागासि ॥

---

मदनशरान् पुलकच्छद्मना ॥' सरे इत्यत्र 'शस्येत्' इत्येत्वम् । स्वेदं लक्षयति—**वपुरिति** ॥ निदाघश्रमहर्षव्यायामलज्जाभयक्रोधादिजन्यो वातेच्छाव्यजनग्रहणाद्यनुभावो वपुर्जलोद्गमः स्वेद इत्यर्थः । हर्षजन्यं स्वेदमुदाहरति—**शृण्वतीति** ॥ प्रियसंदेशं स्वकुशलप्रेषणम् । वैवर्ण्यं लक्षयति—**विषादेति** ॥ कोपातपशीतभयादिजन्यं कार्श्यसौन्दर्यविप्लवाद्यनुभावं भिन्नवर्णत्वं वैवर्ण्यमित्यर्थः । विरहजन्यविषादमूलं वैवर्ण्यमुदाहरति—**णरणाहेति** ॥ एह्णि इदानीम् । श्यामाया युवतेः श्यामवर्णायाश्च । अश्रु लक्षयति—**अश्रिवति** ॥ क्रोधहर्षभयजृम्भादिजन्यं नेत्रमार्जनाद्यनुभावं नेत्रजलमश्रिवत्यर्थः । दुःखमूलमश्रूदाहरति—**वीरेति** ॥ वैस्वर्यं लक्षयति—**मतमिति** ॥ हर्षशोकभयज्वरादिजन्यं स्वरवर्णस्खालित्याद्यनुभावं गद्गदभाषित्वं वैस्वर्यमित्यर्थः । हर्षमूलं वैस्वर्यमुदाहरति—**विअणम्मीति** ॥ विजने सुरतसमये इत्यर्थः । प्रियेण समं क्षामक्षामाक्षरं भणत्याः सुखपारवश्यादिति भावः । एको जानात्यनङ्गोऽर्थं वध्वा भणितानाम्, त्रायस्व, त्वं मे प्राणाः, अलमलम्,

यथा

*आणेदुं णरणाहं गदो क्खु सहीजणो विलंबेइ ।
मम्मह णमामि चंदं सिक्खअ चिरेहि ईसि त्ति ॥ ४३ ॥

अथ चिन्ता ।

**इष्टानभिगमात् ध्यानं चिन्ता शून्यत्वतापकृत् ॥ ४४ ॥**

यथा—

†सण्णिहिअं वि गुरुअणं ण अ पेख्खइ पुच्छिआ वि णाळवइ ।
एसा वि मग्गइ गइं हिअअस्स पिआणुबंधस्स ॥ ४५ ॥

अथ मोहः ।

**मोहस्तु मूर्च्छनं भीतिदुःखावेशानुचिन्तनैः ।**

यथा—

कथमपि गमयित्वा वासरं दीर्घदीर्घं
विरचितनववेषा प्रेषयित्वाऽथ दूतीः ।
चिरयति हृदयेशे प्रांशुभिश्चन्द्रपादै-
रभिहतसकलाङ्गी मूर्च्छिता कोमलाङ्गी ॥ ४६ ॥

---

* आनेतुं नरनाथं गतः खलु सखीजनो विलम्बते ।
मन्मथ नमामि चन्द्रं शिक्षय चिरय ईषदिति ॥
† संनिहितमपि गुरुजनं न च प्रेक्षते पृष्टाऽपि नालपति ।
एषाऽपि मार्गते गतिं हृदयस्य प्रियानुबन्धस्य ॥

---

मा मेत्यादीनां दैन्यप्रेमालसथांदिसमर्थानां वचनानामित्यर्थः। मुणइ इत्यत्र जानातेर्मुणादेशः। अत्र गद्गदवाक्यानां कामोद्दीपकत्वमतिमात्रमभूदिति परमो भावः॥ संचारिणां स्वरूपोदाहरणे क्रमेणाह—**अथेत्यादिना** ॥ निर्वेदं लक्षयति—**दुःखेति** ॥ दुःखादिजनिता निष्फलत्वबुद्धिर्निर्वेद इत्यर्थः। अयं च विभावानुभावरसाङ्गत्वेन स्वातन्त्र्येण बहुधा संभवति। अतस्तत्संग्रहार्थमादिशब्दः। अस्यानुभावानाह—**तत्रेति** ॥ चशब्दाद्वैवर्ण्यादयो गृह्यन्ते । संचारिणामपि क्वचिदनुभावत्वं संभवतीत्युक्तम् । तत्र प्रियवियोगजन्यदुःखमूलं निर्वेदमुदाहरति—**सहीति** ॥ **प्रतापरुद्रं चेति** ॥ चशब्दोऽवधारणे । कर्पूराद्यतिरिच्यमानशैत्यसौरभ्ययोस्तत्रैव सुलभत्वादिति भावः। उदाहरणान्तराण्यन्यतो द्रष्टव्यानीत्युपेक्ष्य ग्लानिं लक्षयति—

अथ स्मृतिः ।

पूर्वानुभूतविषयं ज्ञानं स्मृतिरुदाहृता ॥ ४७ ॥

यथा—

प्रतापरुद्रस्य भुजे वसन्त्या क्षोण्यातपः कीदृशमार्जितं स्यात् ।
स्पृष्टं सकृद् येन मदीयमङ्गं प्राप्नोति विष्वक् सुखवज्रलेपम् ॥ ४८ ॥

अथ धृतिः ।

धृतिश्चित्तस्य नैस्स्पृह्यं ज्ञानाभीष्टागमादिभिः ।

यथा—

वीररुद्रनृपतौ हृदय ! त्वद्वल्लभे त्रिभुवनैकधुरीणे ।
साधु साधु कृतकृत्यमसि त्वं मन्यसे जगदशेषमसारम् ॥ ४९ ॥

अथ व्रीडा ।

चेतःसंकोचनं व्रीडाऽनङ्गरागस्तवादिभिः ॥ ५० ॥

यथा—

तथा समालोकनकौतुकानां मनोरथैरन्ध्रपुराङ्गनानाम् ।
विलोकिते रुद्रनृपे भवन्ति पर्यस्तपक्ष्माणि विलोचनानि ॥ ५१ ॥

---

ग्लानिरिति ॥ क्षुत्पिपासानिधुवनादिप्रयासजनितो बलापचयो ग्लानिरित्यर्थः वैवर्ण्यारतिग्रहणं क्षामाङ्गवचनक्रियाद्युपलक्षणम् । सुरतश्रान्तायाः प्रियगौरवोद्वहन-प्रयासापादनमुत्कर्षन्त्याः कस्याश्चिद्दौर्बल्यमुदाहरति—तेळ्ळोक्कमिति ॥ त्रयो लोकास्त्रैलोक्यं विश्वमित्यर्थः । चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः । हृदयेन वक्षःस्थलेन । साहसिकी स्वयं तन्वङ्गीति विदित्वापि प्रवृत्तत्वादिति भावः । सहसा बलेनाविमृश्य वर्तत इत्यस्मिन्नर्थे 'ओजःसहोऽम्भसा वर्तते' इति ठगन्तात् साहसिकशब्दात् †कलोपे, स्त्रियां नित्ये ईकारप्रत्यये प्राप्ते साहसिकीति रूपं, गौरादौ तथा विधानात् । पुंसः, 'जातेर्वा' (वा. ४-१-६३) इति विकल्पस्तु अप्राप्तनीलादि-शब्दविषय इति साहसिकेत्याकारान्तपाठ उपेक्षणीयः । शङ्कां लक्षयति—अनिष्टेति ॥ परक्रौर्यादात्मदुर्नयाद्वा अनर्थप्राप्तेरभ्यूहनं शङ्केत्यर्थः । आदिग्रहणाद्वैवर्ण्यवैस्वर्य-दिगवलोकनादयो गृह्यन्ते । उदाहरति—ण मुणद्धिति ॥ मुग्धानां गूढानुरागस्य प्राकट्यमेवानर्थ इति भावः । असूयां लक्षयति—परेति ॥ गर्वदौर्जन्यमन्युजन्यं परोत्कर्षासहिष्णुत्वमसूयेत्यर्थः । निन्दावज्ञाभ्रुकुट्यादयोऽनुभावाः । उदाहरति—अहीति ॥ अभिजातिः कुलम् । गुणाः दाक्षिण्यादयः । यत्र चतुर्विधाभरणरा-

---

† कलोप इति । ठकः ककारस्य लोप इत्यर्थः ।

अथ चपलता ।

चापलं त्वनवस्थानं रागद्वेषादिसंभवम् ।

यथा—

दृष्ट्वा रुद्रनरेन्द्रं तरलतराक्षी विलासमृदुहासा ।
कलयति मौक्तिकहारं स्पृशति च कर्णोत्पलं बाला ॥ ५२ ॥

अथ हर्षः ।

प्रसत्तिरुत्सवादिभ्यो हर्षः स्वेदाश्रुकम्पकृत् ॥ ५३ ॥

यथा—

यत् पूर्वं सरसीषु पद्ममुकुलव्याजात् तपः संचितं
वक्षोजौ युवयोस्तदद्य फलितं जातौ कृतार्थौ युवाम् ।
दत्ता काकतिवल्लभेन भवतोरेषा स्ववक्षःस्थली-
कस्तूरीद्विगुणीभवत्परिमला कल्हारमाला यतः ॥ ५४ ॥

---

हित्येऽपि तत्साहित्येनेवाभासनं तद्रूपम् । 'आवेध्यारोप्यविक्षेप्यबन्धनीयैरभूषितम् । यद् भूषितमिवाभाति तद्रूपमिति कथ्यते ॥' इति लक्षणात् । अधिका किं, न भवतीत्यर्थः । तथापि बहुमाने भागधेयमेव निमित्तमित्याह—**यदिति** ॥ मदं लक्षयति—**मदिरेति** ॥ मोहो वैचित्त्यम् । हर्षः प्रसादः । मदिरादिजन्यो हर्षमोहसंकरो मद इत्यर्थः । अत्र वागङ्गस्खालित्यहसितरुदितादयो यथायोगमुत्तमादिष्वनुभावाः । 'संमोहानन्दसंभेदो मदो मद्योपयोगजः । अमुना चोत्तमः शेते मध्यो हसति गायति ॥ अधमप्रकृतिश्चापि परुषं वक्ति रोदिति' इति **साहित्यदर्पणे** । उदाहरति—**भणईति** ॥ श्रमं लक्षयति—**श्रम इति** ॥ अध्वसुरतादिजन्यः खेदः श्रम इत्यर्थः । स्वेद उपमर्दनादेरुपलक्षकः । उदाहरति—**आअच्छईति** ॥ आलस्यं लक्षयति—**मन्देति** ॥ गर्वश्रमादिना प्रयत्नमान्द्यमालस्यमित्यर्थः । अत्र जृम्भोपवेशनादयोऽनुभावाः । उदाहरति—**आस्तामिति** ॥ गृहकृत्यवार्ता धूपवासनावितानसंविधानादिप्रसङ्गः । स्वाङ्गोपचारेषु मृगमदानुलेपनमाल्यधारणमकरिकारचनादिषु । यत्नमान्द्यं प्रयत्नशैथिल्यम्, उपचारकरणं पुनरतिदूरमिति भावः । अग्रे प्रियागमनसमये यत् कर्तव्यं प्रत्युद्गमनरभसाश्लेषप्रियभाषणादिकं तत् स्मरो बलात् बलमाश्रित्य कारयति । ल्यब्लोपे पञ्चमी । अत्र मन्दयत्न इति पाठे विधेयस्य मान्द्यस्य समासे गुणभूतत्वादविमृष्टविधेयांशं नाम दोषः स्यात् । ननु 'एकं संधित्सतोऽपरं प्रच्यवते' इति भावाः—उदाहरति । **कथमिति** ॥ दीर्घदीर्घं प्रियागमनार्थं कदा वा गभस्तिमानस्त-

अथावेगः ।

**इष्टानिष्टागमाज्जात आवेगश्चित्तसंभ्रमः ।**

यथा—

निस्साणध्वनिमाकलय्य सहसा हेलाविहारोद्यतं
द्रष्टुं काकतिवीररुद्रनृपतिं प्रत्यग्रकौतूहलाः ।
अर्धालम्बितमण्डनाः प्रतिपदं व्यत्यस्तभूषा जवा-
दारोहन्ति सुवर्णसौधवलभीशृङ्गाणि पौरस्त्रियः ॥ ५५ ॥

अथ जडता ।

**जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमोद्भवा ॥ ५६ ॥**

यथा—

समायाते नाथे [1]प्रमहसि गृहान् रुद्रनृपतौ
वपुःसौन्दर्यश्रीविजितमदनोदारयशसि ।

---

न्यायेनाविमृष्टविधेयांशं परिहरतोऽनुशासनविरोधः स्यात् । 'पूरणगुण—' इत्यादिना गुणेन षष्ठीसमासप्रतिषेधात् इति चेन्मैवं मंस्थाः । 'संज्ञाप्रमाणत्वात्' 'तद्यत्नगौरवं प्रसज्येत', 'चन्दनगन्धः' इत्यादिसूत्रभाष्यकारादिमहापुरुषप्रयोगदर्शनात् तत्स्थगुणेषु प्रतिषेधाभावात् 'पूरणगुण—' इति प्रतिषेधस्य 'पटस्य शुक्लः' इत्याद्यतत्स्थगुणविषयत्वादिति । प्रपञ्चितं चैतदस्मदुपाध्यायैः घण्टापथे 'न च न स्वीकृतमर्थगौरवम्' इत्येतद्व्याख्यानावसरे। दैन्यं लक्षयति—सत्त्वेति ॥ सत्त्वत्यागो दौर्गत्यादेरुपलक्षकः । तेन सत्त्वत्यागदौर्गत्यादिजन्यं मनसोऽनौद्धत्यं दैन्यमित्यर्थः । कार्पण्यवचनं देहवचनमालिन्याद्यनुभावानामुपलक्षणम् । उदाहरति आणेदुमिति ॥ चिन्तां लक्षयति—इष्टेति॥ अपेक्षितानवाप्तिमूलं ध्यानं चिन्तेत्यर्थः । शून्यतानिःश्वासतापादयोऽनुभावाः । उदाहरति—सण्णिहिअमिति ॥ अत्र प्रथमार्धेन शून्यत्वं द्वितीयार्धेन प्रियानवाप्तिमूलं ध्यानं चोच्यते । मोहं लक्षयति—मोह इति ॥ भीत्यादिभिर्वैचित्त्यं मोह इत्यर्थः । 'मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः । घूर्णनागात्रपतनभ्रमणादर्शनादिकृत् ॥' इति साहित्यदर्पणे । तत्राज्ञानभ्रमोत्पातघूर्णनादर्शनादयोऽनुभावाः। उदाहरति—कथमिति । दीर्घदीर्घं प्रियागमनार्थं कदा वा गभस्तिमान् अस्तमीयादिति प्रतीक्षणेनातिदीर्घमित्यर्थः । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । वासरं, कथमपि क्षणगणनया कथंचित् प्रयत्नगौरवेणेत्यर्थः । 'ज्ञातहेतुविवक्षायामप्यादि कथम-

---

१. 'प्रमनसि' इति पाठभेदः ।

वधूरन्तस्तोषव्यतिकरवशान्नोपचरितुं
पुरस्तादालीनां न चलति तथा नो विरमति ॥ ५७ ॥

अथ गर्वः ।

**अन्यधिक्करणादात्मोत्कर्षो गर्वो बलादिजः ।**

यथा—

को वा शस्त्रग्रहणसमयो मादृशामीदृशानां
कीदृग्वैरं प्रतिधरणिभृत्खेटकीटेष्वमीषु ।
इत्यावेशप्रतिभयभुजाटोपदुर्वारगर्वाः
संक्रीडन्ते रणभुवि भटाः काकतीन्द्रस्य जेतुः ॥ ५८ ॥

अथ विषादः ।

**विषादश्चेतसो भङ्ग उपायापायचिन्तनैः ॥ ५९ ॥**

---

व्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढयोः ॥' इत्यभिधानात् । गमयित्वा यापयित्वा । विरचितनववेषा विहितप्रियागमनसमयोचितशृङ्गारा सती । अथशब्दो विलम्बाभावसूचनार्थः । दूतीः पुङ्खानुपुङ्खतया प्रेषयित्वा हृदयेशे प्राणनाथे चिरयति विलम्बमाने सति कोमलाङ्गी, अत एव प्रांशुभिरायतैश्चन्द्रपादैरिन्दुकिरणैः कशाकल्पैरभिहतसकलाङ्गी मूर्च्छिता । अनाथाः पादैरभिहन्यमाना मूर्च्छन्तीति ध्वन्यते । स्मृतिं लक्षयति—**पूर्वेति** ॥ सदृशादृष्टचिन्ताद्यैः संस्कारोद्बोधे सति पूर्वानुभूतार्थविषयज्ञानं स्मृतिरित्यर्थः । अत्र भ्रून्नमनशिरःकम्पादयोऽनुभावाः । स्पर्शसुखस्मरणमुदाहरति—**प्रतापेति** ॥ निबिडसुधालेपो वज्रलेपः । अत्र कस्यचिन्मदङ्गस्य कादाचित्कः प्रियकरस्पर्शः सर्वाङ्गीणमविच्छिन्नं च सुखं जनयति । वीररुद्रभुजे नित्यनिवासाया भूमेः किमु वक्तव्यमिति भावः । धृतिं लक्षयति—**धृतिरिति** ॥ आदिग्रहणात् शक्त्यादयो गृह्यन्ते । ज्ञानादिभिर्निःस्पृहत्वं धृतिरित्यर्थः । 'ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः । सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ' ॥ एतैरेव 'संतोषो धृतिः' इत्यन्ये । अव्यग्रभावादयोऽनुभावाः । उदाहरति—**वीरेति** ॥ हे हृदय त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । पात्रादित्वान्न स्त्रीत्वम् । धुरं वहतीति धुरीणः, 'खः सर्वधुरात् ' इत्यत्र योगविभागात् खप्रत्ययः । साधु साध्वित्याभीक्ष्ण्ये द्विर्भावः । अत्राभीष्टागमाद् धृतिः । व्रीडां लक्षयति—**चेत इति** ॥ अनङ्गनिमित्तो रागोऽनङ्गरागः । स्तवः स्तोत्रम् । आदिग्रहणादाचारभ्रंशादयः । चेतःसंकोचनं धाष्टर्याभावः । मदनाभिलाषादिभिर्मनःसंकोचो व्रीडेत्यर्थः । अत्रान्तर्धानवैवर्ण्याधोमुखत्वादयोऽनुभावाः । उदाहरति—**तथेति** ॥ अभ्यासङ्गेनानिमिषेण च तृष्णानुगुणं दृष्ट्वा

यथा—

*पेसेमि मण त्ति मुहा तं मं मोक्खूण वल्लहे लग्गं ।
मं उज्झिअ णो गच्छइ मअणो सहि किं णु कादव्वं ॥ ६० ॥

अथौत्सुक्यम् ।

**कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत् ।**

यथा—

†अंधवुरभामिणिजणो अंगाइ पसाहिऊण तुवरंतो ।
रुद्दणरेंदागमणे विलंबिअं सहइ किच्छेण ॥ ६१ ॥

अथ निद्रा ।

**निद्रा चित्तनिमीलनम् ।**

---

* प्रेषयामि मन इति मुधा तन्मां मुक्त्वा वल्लभे लग्नम् ।
मामुज्झित्वा नो गच्छति मदनः सखि किं नु कर्तव्यम् ॥

† अन्ध्रपुरभामिनीजनोऽङ्गानि प्रसाध्य त्वरमाणः ।
रुद्रनरेन्द्रागमने विलम्बितं सहते कृच्छ्रेण ॥

---

जन्मनो जीवितस्य नयनानां च साफल्यं संपादयाम इत्यादयोऽभिलाषाः मनोरथाः। तैर्हेतुभिस्तथाभूतं गाढमालोकनकौतुकं दर्शनोत्कण्ठा यासां तासामन्ध्रपुराङ्गनानां विलोचनानि रुद्रनृपे विलोकिते सति पर्यस्तपक्ष्माणि सनिमेषाणि भवन्ति, दृष्टिमपसारयन्तीत्यर्थः। अत्र नृपावलोकनानन्तरमेवानुरागोदयाल्लज्जाऽभूदिति भावः। चापलं लक्षयति—चापलमिति ॥ रागद्वेषमात्सर्यादिमूलमनवस्थानं चापलमित्यर्थः। अत्रानुभावाः भर्त्सनपारुष्यस्वच्छन्दाचरणादयः। अत्र रागमूलं चापलमुदाहरति—दृष्ट्वेति ॥ बाला रुद्रनरेन्द्रं दृष्ट्वा तरलतराक्षी अतिलोलदृष्टिरित्यर्थः। विलासमृदुहासा विलासप्रधानमन्दस्मिता च। भवतीति शेषः। अत्र तरलदर्शनादिचेष्टाचतुष्टयमध्ये क्षणमप्येकत्र मनसोऽनवस्थानाच्चापलम्। हर्षं लक्षयति—प्रसत्तिरिति ॥ प्रियागमनपुत्रजननाद्युत्सवादिजनितो मनःप्रसादो हर्ष इत्यर्थः। स्वेदादयोऽनुभावाः। उदाहरति—यदिति ॥ अत्र काचित् कामिनी कुचौ संबोध्य तयोः प्रियदत्तस्वयंधृतकल्हारमालालाभजन्यधन्यत्वकथनव्याजेन स्वकीयं हर्षमाविष्करोति। आवेगं लक्षयति—इष्टेति ॥ प्रियादेरिष्टस्य राजविद्रवातपवर्षादेरनिष्टस्य चागमात् जातश्चित्तसंभ्रम आवेग इत्यर्थः। अत्र हर्षशोकत्वरास्तम्भादयोऽनुभावाः। उदाहरति—निस्साणेति ॥ अर्धालम्बितमण्डनाः एकस्मिन्नेव लोचनेऽञ्जनमेकस्मिन्नेव चरणे लाक्षाविलेपनमित्यादिक्रमेणेति भावः। प्रतिपदं

यथा—

*सिविणे दिट्ठं दइअं वहुआ आलिंगिदुं किदोज्जोआ ।
उवह दरमीलिअच्छी गअणम्मि करे पसारेइ ॥ ६२ ॥

अथापस्मारः ।

**आवेशो मोहदुःखाद्यैरपस्मारोऽङ्गतापकृत् ॥ ६३ ॥**

यथा—

दृष्ट्वा स्वप्ने कुपितवदनं काकतीयक्षितीन्द्रं
हा हा रक्षेत्यसकलगिरः संभ्रमोत्थानभाजः ।
धावन्त्यन्तर्वणभुवि लुठन्त्याह्वयन्त्यात्मबन्धून्
आराद्भूतानपि रिपुगणा व्यस्तनामग्रहेण ॥ ६४ ॥

अथ सुप्तिः ।

**सुप्तिर्निद्रासमुद्रेकः ।**

यथा—

विश्वैकरक्षाजुषि काकतीन्द्रे निश्चिन्ततां प्राप्तवतो मुरारेः ।
तत्कीर्त्तिचन्द्रातपवर्धितोऽपि दुग्धाम्बुधिर्नैव भिनत्ति निद्राम् ॥ ६५ ॥

---

* स्वप्ने दृष्टं दयितं वधूरालिङ्गितुं कृतोद्योगा ।
पश्यत दरमीलिताक्षी गगने करौ प्रसारयति ॥

---

प्रतिस्थानम् । व्यत्यस्तभूषा वैपरीत्येनामुक्ताभरणाः कण्ठादौ काञ्च्यादिकं कटितटादौ हारादिकं च धारयन्त्य इत्यर्थः । जाड्यं लक्षयति—**जाड्यमिति** ॥ इष्टानिष्टागमोद्भूतमितिकर्तव्यतामूढत्वं जाड्यमित्यर्थः । अत्रानिमेषनयननिरीक्षणतूष्णींभावादयोऽनुभावाः । उदाहरति—**समायात इति** ॥ सखीसमक्षनिमित्तलज्जाभरेणाच्छादितानुभावो हर्षोऽन्तस्तोषः, तस्य व्यतिकरः संबन्धः । अत्र नोपचरितुमित्यत्र नञो न चलति नो विरमतीत्युभयत्राप्यनुषङ्गः । तेनोभयत्र नञ्द्वयेन लज्जासंभावितस्य चलननिषेधस्योत्कण्ठासंभावितस्य विरमणनिषेधस्य च निवृत्तिः सूच्यते । यथाह **वामनः**—'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति । अत्रोत्कण्ठाप्रतापाभ्यां प्रियोपचारं प्रति प्रवृत्तिनिवृत्त्योरुभयत आकर्षणान्नायिकायाः सर्वव्यापारप्रतिबन्धिनी सेयमुभयतःपाशा रज्जुरभूदिति भावः । गर्वं लक्षयति—**अन्येति** ॥

अथ विबोधः ।

**विबोधश्चेतनावाप्तिर्जृम्भाक्षिपरिमार्गकृत् ।**

यथा—

प्रतापरुद्रे नृपमौलिरत्ने विश्वंभरां रक्षति शिक्षितारौ ।
विजृम्भमाणाः परितः प्रजानां भाग्यश्रियस्तत्क्षणमुन्मिषन्ति ॥ ६६ ॥

अथामर्षः ।

**अमर्षः सापराधेषु चेतःप्रज्वलनं मतम् ॥ ६७ ॥**

यथा—

अरे ! भूपाश्चापान् नमयत शिरांस्युन्नमयत
प्रवृत्ताः स्वस्त्रीणामहमहमिका वीरवरणे ।
त्वरन्ते नः खड्गाः प्रविदलनकेल्यामिति भटा
रणाग्रे गर्जन्ति प्रकटितरुषो रुद्रनृपतेः ॥ ६८ ॥

---

बलैश्वर्याभिजनलावण्यादिजन्योऽन्यधिक्कारावज्ञानसविलासाङ्गवीक्षणाद्यनुभाव आत्मोत्कर्षाभिमानो गर्व इत्यर्थः । बलमूलगर्वमुदाहरति—**क इति** ॥ मादृशामतिसूर्यप्रतापानामिति भावः । शस्त्रग्रहणसमयः को वा - लक्ष्याभावादायुधग्रहणावसरो नास्तीति भावः । ये पुनः पुरो वर्तन्ते प्रतिभटमानिनस्तेषु खद्योतकल्पेषु वैरवर्णनमपि लज्जावहमेवेत्याह—**कीदृगिति** ॥ आवेश आग्रहः । संक्रीडन्ते नैव प्रयासमनुभवन्तीति भावः । 'क्रीडोऽनुसंपरिभ्यश्च' इति तङ् । विषादं लक्षयति—**विषाद इति** ॥ प्रारब्धकार्यभङ्गापराधपरिज्ञानविघ्नविपदादिभवः सत्त्वसंक्षयो विषाद इत्यर्थः । अयं चोपायान्वेषणवैमनस्यमुखशोषाद्यनुभावतारतम्यादुत्तमाद्याश्रयत्वेन त्रिविध इत्याहुः । तत्रोत्तमाश्रयं विषादमुदाहरति—**पेसेमीति** ॥ मन इति । नपुंसकत्वेनेदमन्यत्र रिंसारहितमिति मत्वेति भावः । अत एवोक्तं पूर्वैः---'नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः । तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥' इति । अत्र किं कर्तव्यमित्युपायगवेषणगोचरत्वागारम्भसूचितया चिन्तया विषादो व्यज्यते । औत्सुक्यं लक्षयति—**कालेति** ॥ इष्टविरहरम्यवस्तुदिदृक्षादिजन्यमनस्तापत्वरानिःश्वासनिद्राद्यनुभावं कालाक्षमत्वमौत्सुक्यमित्यर्थः । उदाहरति---**अंधेति** ॥ भामयत्यवश्यं कुप्यतीति भामिनी । 'भाम क्रोधे' इत्यस्माद्धातोश्चौरादिकादावश्यको णिनिः । यद्वा 'स्त्रीणां ललितकोपो भाम' इति **भोजराजः** ; तद्वती भामिनी । अत्र कृच्छ्रशब्दसूचितैश्चिन्तानवस्थानगात्रगौरवशय्याभिलाषाद्यनुभावैः

अथावहित्था ।

**हर्षाद्याकारसंगुप्तिरवहित्थेति कथ्यते ।**

यथा—

*गोट्ठीए महिलाणं सोऊण पआवरुद्दचरिआइ ।
आलिहइ ओणअमुही मुद्धा चलणेण महिपट्ठं ॥ ६९ ॥

अथोग्रता ।

**दृष्टेऽपराधे चण्डत्वमुग्रता तर्जनादिकृत् ॥ ७० ॥**

यथा—

प्रियमानीय मानिन्या विरहार्तिर्निवार्यताम् ।
यदेतस्याः कटाक्षोल्कापातैरिन्दुर्मषीकृतः ॥ ७१ ॥

अथ मतिः ।

**तत्त्वमार्गानुसंधानादर्थनिर्धारणं मतिः ।**

---

* गोष्ठयां महिलानां श्रुत्वा प्रतापरुद्रचरितानि ।
आलिखत्यवनतमुखी मुग्धा चरणेन महीपृष्ठम् ॥

---

प्रियदिदृक्षाविषयमौत्सुक्यं व्यज्यते । निद्रां लक्षयति---निद्रेति ॥ चित्तस्य निमीलनं बाह्येन्द्रियसंबन्धविरहः । चिन्तानैश्चिन्त्यव्यायामादिजन्यं जृम्भाङ्गभङ्गनेत्रनिमीलनाद्यनुभावं चित्तनिमीलनं निद्रेत्यर्थः । अत एवाहुः **प्रशस्तपादाः**—'यमर्थमादृतश्चिन्तयन् स्वपिति सैव चिन्तासन्ततिः प्रत्यक्षाकारा संजायते' इति । अपस्मारं लक्षयति—**आवेश इति** ॥ अशुचित्वधातुवैषम्यभूतावेशादिजन्यो भूपातभ्रमणभुजास्फोटविकटोक्तिलालाफेनाद्यनुभाव आवेशोऽपस्मार इत्यर्थः । उदाहरति—**दृष्ट्वेति** ॥ कुपितवदनं भ्रूकुट्यादिना भयंकरमुखमित्यर्थः । अन्तर्वणभुवि वनमध्य इत्यर्थः । 'प्रनिरन्तः—' इत्यादिना णत्वम् । आराद्भूतान् समीपस्थानपि । अत्र शत्रूणां भयकार्यमोहमूलोऽपस्मारो दैन्यधावनप्रभृतिभिरनुभावैर्व्यज्यते । सुप्तिं लक्षयति—**सुप्तिरिति** ॥ निःश्वासोच्छ्वासनिश्चलत्वनेत्रनिमीलनाद्यनुभावो निद्रासमुद्रेकः सुप्तिरित्यर्थः । उदाहरति—**विश्वेति** ॥ काकतीन्द्रे विश्वैकरक्षाजुषि त्रिभुवनैककल्याणपरायणे सति । जुषेः क्विप् । निश्चिन्ततां प्राप्तवतः अवतीर्णभारत्वादिति भावः । अत एव मुरारेः पयोधिवृद्धावपि निद्राभङ्गाभावात् सुषुप्तिरित्याह—**तदिति** ॥ विबोधं लक्षयति— **विबोध इति** ॥ शब्दस्पर्शाहारपरिणामादिजन्या भुजोत्क्षेपाङ्गुलिस्फोटजृम्भणाऽक्षिविमर्दनाद्यनुभावा चेतनावाप्तिर्विनिद्रत्वं विबोध इत्यर्थः । उदाहरति—

यथा—

*को संसओ महिअले चंदो एव्व वीररुद्दणरणाहो ।
जस्स [खु] करप्पस्सादो अंगाइ मिअंकरअणंति ॥ ७२ ॥

अथ व्याधिः ।

**मनस्तापाद्यभिभवाज्ज्वरादिर्व्याधिरिष्यते ॥ ७३ ॥**

यथा—

प्रतापरुद्रस्य दिशां जिगीषोः प्रत्यर्थिनारीजनदेहजन्मा ।
स्मरज्वरोष्मा हिमवत्प्रदेशान् स्मर्तव्यनीहारकथान् करोति ॥ ७४ ॥

अथोन्मादः ।

**उन्मादस्तुल्यवर्तित्वं चेतनाचेतनेष्वपि ।**

यथा—

प्रतापरुद्रस्य जयप्रयाणभेरीध्वनौ मूर्च्छति दिङ्मुखेषु ।
त्रासाकुला भ्रान्तिमुपेत्य वृक्षान् पृच्छन्ति मार्गं रिपुभूमिपालाः ॥ ७५ ॥

* कः संशयो महीतले चन्द्र एव वीररुद्रनरनाथः ।
यस्य [खलु] करस्पर्शादिङ्गानि मृगाङ्करत्नन्ति ॥

**प्रतापेति** ॥ विजृम्भमाणाः विवर्धमानाः जृम्भां कुर्वाणाश्च । उन्मिषन्ति उद्भवन्ति, नेत्राण्युन्मीलयन्ति च । अत्रेत्थमर्थद्वयस्याभेदाध्यवसायादारोपितचेतनधर्माणां भाग्यसंपदामुन्निद्रत्वप्रतीतेर्विबोध इति भावः । अमर्षं लक्षयति—**अमर्ष इति** ॥ अधिक्षेपावमानादिना सापराधेषु मनःप्रज्वलनमभिनिविष्टत्वं प्रतिचिकीर्षेति यावत् । एवंविधेऽमर्षे स्वेदशिरःकम्पचिन्तोपायान्वेषणोत्साहतर्जनादयोऽनुभावा द्रष्टव्याः । उदाहरति—**अरे इति** ॥ स्वस्त्रीणामप्सरसामन्योन्यं श्रेष्ठाहमित्यभिमानोऽहमहमिका । 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः' इत्यमरः । अहमिति विभक्तिप्रतिरूपकमव्ययं निपातितम् । तस्य वीप्सायां द्विरुक्तिः । संज्ञायां कन् प्रत्ययः । प्रविदलनकेल्यां खण्डनक्रीडायाम् । अवहित्थां लक्षयति—**हर्षेति** ॥ भयव्रीडाकौटिल्यादिभिर्हर्षादिकार्याकारगोपनमवहित्थेत्यर्थः । अत्र शून्यस्मितान्यथाकथनमिथ्याधैर्यकथाभङ्गादयोऽनुभावा ऊह्याः । उदाहरति—**गोट्ठीए इति** ॥ अत्र काचन सुन्दरी प्रसङ्गादात्मानुरागप्रधानानि प्रियचरितानि श्रुत्वा प्रहर्षन्ती लज्जया मुखविकासादिसंगोपनार्थमधोमुखी महीमालिखतीत्यवहित्थेति भावः । **महिपट्ठमिति** ॥

अथ मरणम् ।

**मरणं मरणार्थस्तु प्रयत्नः परिकीर्तितः ॥ ७६ ॥**

यथा—

*पिअविरहं असहंती वहुआ णिअजीविअं उवेक्खंती ।
सेव्वइ जोह्वं दक्खिणपवणस्स तणुं समप्पेइ ॥ ७७ ॥

साक्षान्मरणस्यामङ्गलत्वान्नोदाहरणत्वमुचितम् ।

अथ त्रासः ।

**आकस्मिकभयाच्चित्तक्षोभस्त्रासः प्रकीर्त्यते ।**

यथा—

†पणअकुविआ चिरेण वि वहुआ सोऊण घणवणत्थणिअं ।
दइअं सरहसवलिआ आलिंगइ वेवमाणंगी ॥ ७८ ॥

---

* प्रियविरहमसहमाना वधूर्निजजीवितमुपेक्षमाणा ।
सेवते ज्योत्स्नां दक्षिणपवनस्य तनुं समर्पयति ॥

† प्रणयकुपिता चिरेणापि वधूः श्रुत्वा घनघनस्तनितम् ।
दयितं सरभसवलिता आलिङ्गति वेपमानाङ्गी ॥

---

'पृष्ठेऽनुत्तरपदे' इति नियमेनेत्वाभावात् 'ऋतोऽत्' इत्यत्वम् । 'दिहौ मिथस्स', इति महीकारस्य ह्रस्वः । उग्रतां लक्षयति—**दृष्ट इति** ॥ अपराधे पुत्रमित्रादिद्रोहरूपे दृष्टे सति तर्जनोद्वेजनताडनबन्धनाद्यनुभावं चण्डत्वं क्रौर्यमुग्रतेत्यर्थः । कस्याश्चिद्विरहिण्याः सखी प्रियं प्रति दूतिकां प्रेषयति—**प्रियमिति** ॥ अत्र संतापजननेन सापराधस्येन्दोः कटाक्षज्वालाभिर्मषीकरणोद्योगादुग्रतेति भावः । मतिं लक्षयति—**तत्त्वेति** ॥ नानाविधशास्त्रचिन्तोहापोहादिभ्योऽर्थनिश्चयो मतिरित्यर्थः । अत्र शिष्योपदेशसंशयच्छेदविदग्धव्यवहारमनःसंतोषादयोऽनुभावा द्रष्टव्याः । उदाहरति—**को संसअ इति** ॥ अत्र प्रियकरसंस्पर्शेऽङ्गानामिन्दुकिरणसंस्पर्शे चन्द्रकान्तानामिव द्रवीभावादयं चन्द्र एवेत्यध्यवसायान्मतिः । व्याधिं लक्षयति—**मन इति** ॥ मनस्तापदोषवैषम्याद्यभिभवजन्मा शीतोष्णज्वरादिः शीतालुतोष्णालुताद्यनुभावो व्याधिरित्यर्थः । विरहजन्यं तापज्वरमुदाहरति—**प्रतापेति** ॥ दिशामिति शेषे षष्ठी । 'न लोक—' इत्यादिना कारकषष्ठ्याः प्रतिषेधात् । अत्रोष्णालुतया हिमवत्प्रदेशवासिनोऽपि शत्रुस्त्रीजनस्य हिमापेक्षेति महीयानयं तापज्वर इति भावः । उन्मादं लक्षयति—**उन्माद इति** ॥ भयसंनिपातेष्टवियोगधननाशादिभिश्चित्तविभ्रान्तिरुन्माद इत्यर्थः । अत्रानिमित्तस्मितासंबद्धप्रलापनिर्हेतुकधावनोपवेशनोत्था-

अथ वितर्कः ।

संदेहात् कल्पनाऽऽनन्त्यं वितर्कः परिकीर्तितः ॥ ७९ ॥

यथा—

गुणैस्तत्रासक्तं मम हृदयमन्यत्र गणितं
सखीभिर्नालोचि क्षितिपतिरसौ दुर्लभ इति ।
उपायः को वा स्यात् तदभिगमने मुह्यति मनः
कियान् कोऽयं कीदृक् कियदवधिरन्तर्व्यतिकरः ॥ ८० ॥

तत्र सात्त्विकानां व्यभिचारिणां चानेकरससाधारणत्वान्न विशेषमपेक्ष्योदाहरणं कृतम् । तथा हि शृङ्गारे सर्वेषामनुप्रवेशः संभवति । हास्ये ग्लानिश्रमचपलत्वहर्षावहित्थानां संभवः । करुणे मदधृतिव्रीडाहर्षगर्वौत्सुक्योग्रताभिर्विनाऽन्ये संभवन्ति । रौद्रे ग्लानिशङ्काऽऽलस्यदैन्यचिन्ताव्रीडावेगजडताविषादसुप्तिनिद्रापस्मारावहित्थाव्याध्युन्मादशमत्रासाः न संभवन्ति । वीरे रौद्रान्निर्वेदोऽधिकः । भयानकेऽसूयामदधृतिव्रीडाहर्षगर्वनिद्रासुप्त्यमर्षावहित्थोग्रतामतिभिर्विनाऽन्ये संभवन्ति । बीभत्सेऽद्भुते च चिन्तात्रासादयो यथासंभवमूह्याः । शान्ते निर्वेदधृती संभवतः ।

अथ शृङ्गारचेष्टा निरूप्यन्ते ।

भावो हावश्च हेला च माधुर्यं धैर्यमित्यपि ।
लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ॥ ८१ ॥

---

नरोदनादयोऽनुभावा भवन्ति । भयमूलमुन्मादमुदाहरति—**प्रतापेति** ॥ स्पष्टमेतत् । मरणं लक्षयति—**मरणमिति** ॥ व्याध्यभिघाताभ्यां देहान्मनसोऽपायो हिक्काश्वासाद्यनुभावो मरणमित्यर्थः । धनिकहेमचन्द्राद्यनुसारेण साक्षात्तदुदाहरणस्यामङ्गलत्वात् तदुद्योगोऽत्र विवक्षित इत्याह—**मरणार्थ इति** ॥ शारदातनयस्तु 'मरणेऽभिनयो नास्तीत्येतत् काव्ये न बध्यते' इत्याह । उदाहरति—**पिएति** ॥ भस्मीकरणबुद्ध्येति भावः । त्रासं लक्षयति—**आकस्मिकेति** ॥ अकस्मादेवाकस्मिकम् । विनयादित्वात् स्वार्थे ठक्प्रत्ययः । तकारान्तत्वात् 'इसुसुक्तान्तात् कः' इति कादेशः । अव्ययत्वाट्टिलोपः । तस्मात् भयात् भयहेतोरित्यर्थः । विद्युद्गर्जितभूकम्पादिजन्यः कम्पगात्रसंकोचरोमाञ्चमोहाद्यनुभावश्चेतश्चमत्कारस्त्रास इत्यर्थः । गर्जितमूलं त्रासमुदाहरति—**पणएति** ॥ वितर्कं लक्षयति—**संदेहादिति** ॥ उपलक्षणं चैतत् । तेन संदेहविमर्शादिजन्योऽनेकधासंभावनात्मा भ्रूक्षेपशिरःकम्पाद्यनु-

मोट्टायितं कुट्टमितं बिम्बोको ललितं तथा ।
कुतूहलं च चकितं विहृतं हास इत्यपि ॥ ८२ ॥
एवं शृङ्गारचेष्टाः स्युरष्टादशविधा मताः ।

तत्रासां स्वरूपमुदाहरणं च ।

भावः ।

रसाभिज्ञानयोग्यत्वं भाव इत्यभिधीयते ॥ ८३ ॥

यथा—

*रुद्दणरेंदस्य गुणे गाअइ बालत्तणम्मि विस्सद्धं ।
लज्जइ दरपुलइओ जुवइजणो जोव्वणे गाउं ॥ ८४ ॥

अथ हावः ।

ईषद्दृष्टविकारः स्याद्भावो हावः प्रकीर्त्यते ।

यथा—

अत्रैवेषत्पुलकित इति ।

अथ हेलाः।

सुव्यक्तविक्रियो भावो हेलेति प्रतिपाद्यते ॥ ८५ ॥

* रुद्रनरेन्द्रस्य गुणान् गायति बालत्वे विस्रब्धम् ।
लज्जते दरपुलकितो युवतिजनो यौवने गातुम् ॥

---

भावो वितर्कः इत्यर्थः । उदाहरति—गुणैरिति ॥ गुणैः महाकुलीनतादिभिः । तत्र क्षितिपतौ । अन्यद्दौर्लभ्यादिकं न गणितं मदीयहृदयस्य कामान्धत्वादिति भावः। सखीभिरिति ॥ विवेकवतीभिरपीति भावः। ननु किं गतोदकसेतुबन्धेन, इतः परं वा प्रियप्राप्तावुपायं चिन्तयाम इत्युक्ते, सोऽपि न प्रतीयत इत्याह—उपाय इति ॥ तत्र हेतुमाह—मुह्यति मन इति ॥ मोहापगमानन्तरमुपायश्चिन्त्यतामित्याशङ्क्य इयत्तयेदक्तयेदन्तया वा दुरवगमत्वेन दुश्चिकित्सस्य मोहमहाव्याधेरानन्तर्यमपि दुर्लभमेवेत्याशयेनाह—कियानिति ॥ गच्छता कालेन स्वयमेव मोहशान्तेः किं तया चिन्तयेत्याशङ्क्य कालावधिरपि दुरवबोध एवेत्याह—कियदवधिरिति ॥ व्यतिकरो व्यसनं विपत्तिर्मोह इति यावत्। एवमत्र संदेहेन कल्पनाऽऽनन्त्याद्वितर्क इति भावः। ननु विभावादिवत् सात्त्विकसंचारिणामपि तत्तद्रसप्रस्ताव एव किमिति नोदाहरणं कृतमत आह—तत्रेति ॥ व्यभिचारिणामनेकरससाधारणत्वमुपपादयति—तथाहीत्यादिना ॥

यथा—

*मा होदु कस्स वि फ्फुडं इअ मुद्धे कुणसि वल्लहं हिअए ।
घोसिज्जइ तुह भाओ सव्वंगीणेहि पुलएहिं ॥ ८६ ॥

अथ माधुर्यम् ।

**अभूषणेऽपि रम्यत्वं माधुर्यमिति कथ्यते ।**

यथा—

जितत्रैलोक्यलावण्या प्रकृत्या हरिणेक्षणा ।
किं तु भूषयितुं धत्ते भूषणानीति मे मतिः ॥ ८७ ॥

अथ धैर्यम् ।

**शीलाद्यलङ्घनं नाम धैर्यमित्यभिधीयते ॥ ८८ ॥**

यथा—

†कुलवहुआणं ण जुज्जइ मज्जाआलंघणं खु विसमे वि ।
रुद्दणरिंदगुणा उण हिअअहरा किं णु कादव्वं ॥ ८९ ॥

अथ लीला ।

**प्रियानुकरणं लीला वाग्भिर्गत्याऽथ चेष्टितैः ।**

यथा—

††पेच्छह सहिओ एसा लच्छी रण्णो पआवरुद्दस्स ।
चरिआइ अणुकुणंती रण्णीसु पइव्वआ जाआ ॥ ९० ॥

---

* मा भवतु कस्यापि स्फुटमिति मुग्धे करोषि वल्लभं हृदये ।
घोष्यते तव भावः सर्वाङ्गीणैः पुलकैः ॥

† कुलवधूनां न युज्यते मर्यादालङ्घनं खलु विषमेऽपि ।
रुद्रनरेन्द्रगुणाः पुनर्हृदयहराः किं नु कर्तव्यम् ॥

†† प्रेक्षध्वं सख्य एषा लक्ष्मी राज्ञः प्रतापरुद्रस्य ।
चरितान्यनुकुर्वती राज्ञीषु पतिव्रता जाता ॥

---

भावादयश्चित्तारम्भाः । लीलादयो गात्रारम्भाः । उभयेऽप्यनुभावाः । तदुक्तम्— 'अनुभावश्चतुर्धा स्यान्मनोवाक्कायबुद्धिभिः ।' इति । एतेषां योषिदालम्बनचेष्टारूपाणां यौवनजन्यानामुद्दीपनविभावत्वमपि प्राचामाचार्याणां संमतम् । अतः संकीर्णस्वरूपाणामेतेषां प्रकरणनियमाभावेनायमेव स्वरूपनिरूपणावसर इत्यभि-

अथ विलासः ।

तात्कालिको विकारः स्याद्विलासो दयितेक्षणे ॥ ९१ ॥

यथा —

सहेलं पश्यन्त्याः प्रकृतिसुभगं रुद्रनृपतिं
तदात्वप्रत्युद्यद्विविधललिताटोपमधुरम् ।
रसप्रादुर्भावाद् युगपदुदयत्सात्त्विकमहो
मृगाक्ष्यास्तारुण्ये कुसुमशरशिल्पं विजयते ॥ ९२ ॥

अथ विच्छित्तिः ।

विच्छित्तिरतिरम्यत्वं स्वल्पैरपि विभूषणैः ।

यथा—

*कस्स किए केण किअं काअइपुरइत्थिआण सुंदेरं ।
साहारणभूसाए जं सहि तेल्लोक्करमणिज्जं ॥ ९३ ॥

अथ विभ्रमः ।

विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ॥ ९४ ॥

यथा—

† सोऊण सहिमुहादो दिअहो विरतो त्ति संभमेण वहू ।
हत्थेसु णोउराइं चरणेसु अ कुणइ वलआइं ॥ ९५ ॥

---

* कस्य कृते केन कृतं काकतिपुरस्त्रीणां सौन्दर्यम् ।
साधारणभूषया यत्सखि त्रैलोक्यरमणीयम् ॥

† श्रुत्वा सखीमुखाद्दिवसो विरत इति संभ्रमेण वधूः ।
हस्तयोर्नूपुरे चरणयोश्च करोति वलयानि ॥

---

प्रायेणाह—अथेति ॥ परिगणनादेवाष्टादशविधत्वे जातेऽपि कण्ठोक्तिर्मतान्तरेष्वेतेषामुद्भावचत्वमस्तीति सूचयितुम् । तत्प्रपञ्चस्तु भोजराजीयादिग्रन्थेषु द्रष्टव्यः । तत्र भावं लक्षयति—रसेति ॥ बाल्ययौवनसंधावुत्पन्नः शृङ्गारविषयः प्रथमोऽन्तःकरणविकारो भाव इत्यर्थः । तदुक्तम्—'चित्तस्य विकृतिः सत्त्वं विकृतेः कारणे सति । ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ॥' इति । उदाहरति—रुद्रेति ॥ अत्र यद्यपि 'ईषदर्थे दरशब्दोऽव्ययम्' इति त्रिविक्रमः, तथापीषत्तमत्वमत्र विवक्षितम् । तेन दरपुलकितो दुर्लक्षपुलक इत्यर्थः । हावं लक्षयति—

अथ किलकिञ्चितम् ।

**रोषाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम् ।**

यथा—

*गेह्णइ काअइणाहे विअणंमि पडंचलं मिअच्छीए ।
वेवइ तणू वि णच्चइ भिउडी अवि गग्गआ वाआ ॥ ९६ ॥

अथ मोट्टायितम् ।

**मोट्टायितं स्यादिष्टस्य कथादौ भावसूचनम् ॥ ९७ ॥**

यथा—

† महुराइ रुद्दणरवइचरिआइ वहूए णं सुणंतीए ।
तणुगोवणेण पअडो जह भाओ ण तह पुलएहिं ॥ ९८ ॥

अथ कुट्टमितम् ।

**संमर्देऽपि सुखाधिक्यं रतौ कुट्टमितं मतम् ।**

---

* गृह्णाति काकतिनाथे विजने पटाञ्चलं मृगाक्ष्याः ।
वेपते तनुरपि नृत्यति भ्रुकुट्यपि गद्गदा वाचः ॥

† मधुराणि रुद्रनरपतिचरितानि वध्वा ननु शृण्वत्याः ।
तनुगोपनेन प्रकटो यथा भावो न तथा पुलकैः ॥

---

ईषदिति ॥ दरशब्दस्य मुख्यार्थविवक्षायामिदमेवात्रोदाहरणमित्याह—अत्रैवेषदिति ॥ हेलां लक्षयति—सुव्यक्तेति ॥ उदाहरति—मेति ॥ माधुर्यं लक्षयति—अभूषण इति ॥ अत एवोक्तं दशरूपके—'सर्वास्वप्यवस्थास्वनुल्बणत्वं माधुर्यम्' इति । उदाहरति—जितेति ॥ प्रकृत्या स्वभावेनैव, न तु प्रयत्नेनेति भावः । जितं त्रैलोक्यं येन तत् तथाभूतं लावण्यं पूर्वोक्तः कान्तिविशेषो यस्याः सा तथोक्ता । अत्र स्वाभाविकसौन्दर्यस्य प्रसाधनविधिनिःस्पृहत्वान्माधुर्यमिति भावः । धैर्यं लक्षयति—शीलेति ॥ उदाहरति—कुलेति ॥ विषमे विपद्यपि । लीलां लक्षयति—प्रियेति ॥ उदाहरति—पेच्छहेति ॥ अत्र लक्ष्मीर्नाम काचिन्नायिका प्रियचरितानुकरणाल्लीलावती जातेत्यर्थः । तस्याः पातिव्रत्ये हेतुत्वमुक्तं सर्वज्ञसोमेश्वरेण—'भुक्ते तु भुङ्क्ते या पत्यौ दुःखिते दुःखिता यदि । मुदिते मुदितात्यर्थं प्रोषिते मलिनाम्बरा ॥ सुप्ते पश्चात्तु या शेते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता ॥' इति । राज्यलक्ष्मीरपि दानभोगादावत्यन्तमनुकूला राज्ञि निश्चलाऽभूदिति व्यज्यते । विलासं लक्षयति—तात्कालिक इति ॥

यथा—

निर्मर्यादमनोभवोत्सवकथाविस्रम्भकर्णेजपै-
रङ्गैर्विस्मितमानसां प्रियसखीमालोक्य जातत्रपा ।
वैयात्यं निजमात्मवल्लभकृतां रागान्धतां जानती
सद्यो नम्रमुखेन्दुरिन्दुवदना क्षोणीं लिखन्ती स्थिता ॥ ९९ ॥

अथ बिब्बोकः ।

**मनाक् प्रियकथालापे बिब्बोकोऽनादरक्रिया ॥ १०० ॥**

यथा—

लक्ष्मीः सद्मनि निर्भरं विहरतां, क्षोणी भुजालम्बन-
क्रीडां नैव जहातु, किं च सततं वाणी मुखे तिष्ठतु ।
ज्ञातं रुद्रनरेश्वरस्य बहुभिर्विज्ञातपूर्वैः प्रिय-
व्याहारैः कृतमेव दूति ! मदनश्चापाय संनह्यतु ॥ १०१ ॥

अथ ललितम् ।

**सुकुमारोऽङ्गविन्यासो ललितं परिकीर्त्यते ।**

यथा—

पदन्यासक्रीडारणितमणिमञ्जीररशनं
सहेलं व्यावल्गत्करवलयनिक्वाणसुभगम् ।

---

विकारो नेत्रभ्रूवक्त्रकर्मणां विशेष इत्यर्थः । उदाहरति—**सहेलमिति** ॥ व्याख्यातमेतन्नायकप्रकरणे प्रौढोदाहरणप्रस्तावे । विच्छित्तिं लक्षयति—**विच्छित्तिरिति** ॥ उदाहरति—**कस्सेति** ॥ साधारणभूषया स्रक्चन्दनताम्बूलादिनापि । केन कृतमित्यनेन सौन्दर्यस्य विधातृशिल्पवैलक्षण्यं प्रतीयते । कस्य कृत इत्यनेन भोक्ता तदनुरूपो नोपलभ्यत इति । विभ्रमं लक्षयति—**विभ्रम इति** ॥ काले प्रियसमागमादिसमये । त्वरया मदनावेशादिसंभ्रमेणेत्यर्थः । भूषाणां हाराङ्गदादीनां स्थानविपर्ययः स्थानव्यत्यास इत्यर्थः । उदाहरति—**सोऊणेति** ॥ श्रुत्वा सखीमुखाद्दिवसो विरत इति । प्रियासक्तचित्ततया स्वयं दिवसावसानमपि न जानातीति भावः । ततः संभ्रमेण वधूर्हस्तयोर्नूपुरे चरणयोर्वलये च करोति । किलकिञ्चितं लक्षयति—**रोषेति** ॥ उदाहरति—**गेह्णईति** ॥ अत्र भयादिविकाराणां कम्पादीनां मेलनात् किलकिञ्चितम् । मोट्टायितं लक्षयति—**मोट्टायितमिति** ॥ प्रियगुणकथनादौ स्वाभिलाषप्रकटनं मोट्टा-

स्मितज्योत्स्नावीचीतरलवचनं रुद्रनृपतेः
पुरन्ध्रीणामासीदनुरहससेवाविलसितम् ॥ १०२ ॥

अथ कुतूहलम् ।

**कुतूहलं रम्यदृष्टौ चापलं परिकीर्त्यते ॥ १०३ ॥**

यथा—

वीररुद्रमधिरूढसिन्धुरं द्रष्टुमन्ध्रनगरीपुरन्ध्रयः ।
कुर्वते रचितसंक्रमत्वरास्तुङ्गसद्मशिखराधिरोहणम् ॥ १०४ ॥

अथ चकितम् ।

**चकितं भयसंभ्रमः ।**

यथा—

अविज्ञातायातं स्वमकथितमाल्यापि हसितुं
हठादुत्पश्यन्त्याश्चकितचकितोदञ्चितदृशः ।
विलासानुद्वेलानुदितमदनान् वीक्ष्य सुतनो-
स्तथैव प्रत्येतुं पुनरवनिपालः स्पृहयति ॥ १०५ ॥

अथ विहृतम् ।

**विहृतं प्राप्तकालस्य वाक्यस्याकथनं ह्रिया ।**

---

यितमित्यर्थः। उदाहरति—**महुराईति** । पुलकानां प्रियगुणस्तुतिजनितमान्मथभावसूचकत्वं **भावप्रकाशे**— 'गुणान् गणयति स्वैरं वीक्षते भावमन्थरम् । रोमाञ्चो गद्गदपदा वाक् स्वेदश्च कपोलयोः । विस्रम्भकथनं दूत्या तत्समागमचिन्तनम् । एवं गुणस्तुतिभवा भावा मन्मथसूचकाः ॥' इति । कुट्टमितं लक्षयति—**संमर्द इति** ॥ केशाधरादिग्रहे सत्यपि बहिः कोपजनकेऽन्तःसान्द्रानन्दत्वं कुट्टमितमित्यर्थः । उदाहरति—**निर्मर्यादेति** ॥ निर्मर्यादो निर्दयप्रवृत्तो मनोभवोत्सवः केशाधरग्रहादिकामक्रीडैव कथा वादस्तस्य विस्रम्भकर्णजपैरुच्छृङ्खलत्वसूचकैर्नखदन्तपदादिद्वारेति भावः। 'स्तम्बकर्णयो रमिजपोः' इत्यच्प्रत्यये 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । वैयात्यं धाष्टर्यम् । आत्मवल्लभकृतां तत्संबन्धिनीमित्यर्थः । करोत्यर्थस्य धात्वर्थसामान्यत्वात् विशेषपर्यवसानम् । रागान्धतां विशृङ्खलविहारहेतुभूतामिति भावः। अत्र लिखन्तीति वर्तमानापदेशेन तत्कारणभूताया लज्जाया अविरामः सूच्यते । अत्राभूतपूर्वसंभोगचिह्नसाक्षात्कारेण विस्मयमानां प्रियसखीं प्रेक्ष्याधुना मन्दाक्षमन्थरत्वेनाज्ञातचरकेशाधरादिग्रहदुःखतया तादात्म्यसुखाति-

यथा—

प्रतापरुद्रस्य भुजान्तरस्थां कल्हारमालाममुना स्पृशेति ।
स्तनद्वये पत्रलिपिं लिखन्तीं सखीं वधूः पश्यति साभिमानम् ॥ १०६ ॥

अथ हसितम् ।

**आकस्मिकं तु हसितं यौवनादिविकारजम् ॥ १०७ ॥**

*जह जह हसइ मिअच्छी जोव्वणलच्छीए सिक्खिआ महुरं ।
तह तह कुसुमेसुसरा विअसंति पिअस्स आसा अ ॥ १०८ ॥

॥ अथ मन्मथावस्था द्वादश निरूप्यन्ते ॥

अथ शृङ्गारस्याङ्कुरितत्वपल्लवितत्वकुसुमितत्वफलितत्वहेतवो द्वादशावस्था निरूप्यन्ते ।

**चक्षुःप्रीतिर्मनःसङ्गः संकल्पोऽथ प्रलापिता ।**
**जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः ॥ १०९ ॥**
**उन्मादो मूर्च्छनं चैव मरणं चरमं विदुः ।**
**अवस्था द्वादश मताः कामशास्त्रानुसारतः ॥ ११० ॥**

केचित्तु दशावस्था इति कथयन्ति ।

---

* यथा यथा हसति मृगाक्षी यौवनलक्ष्म्या शिक्षिता मधुरम् ।
तथा तथा कुसुमेषुशरा विकसन्ति प्रियस्य आशा च ॥

---

भूमिसूचनात् कुट्टमितमिति भावः। बिब्बोकं लक्षयति—**मनागिति** ॥ उपलक्षणमेतत् । तेन गर्वाभिमानादिना दयितेऽप्यनादरकरणं बिब्बोक इत्यर्थः । उदाहरति—**लक्ष्मीरिति** ॥ अयि सखि! त्वय्यविरतकोपायां लक्ष्म्यादिनायिकासु नानाविधविहारैः प्रेयसीपदं लभमानासु तव पुनर्नावकाशो लभ्यते । प्रियो हि प्रियाणि कथयतीत्येवं प्रियप्रेषितया दूत्या कथिते मानग्रन्थिग्रथितहृदयतया मरणेऽपि कृतसंकल्पाया अनादृतप्रियकथाया नायिकाया वचनमेतत् । अत एवायं बिब्बोक इति भावः । ललितं लक्षयति—**सुकुमारेति** ॥ उदाहरति—**पदेति** ॥ अनुगतं रहोऽनुरहसमिति प्रादिसमासः । 'अनुगतं रहोऽस्मिन्निति बहुव्रीहिर्वा' इति **पदमञ्जरीकारः** । 'अन्ववतप्ताद्रहसः' इति समासान्तोऽच्प्रत्ययः । अत्रान्ध्रनायकपुरन्ध्रीणामेकान्तसेवायां मणिमञ्जीरादिशिञ्जितमञ्जुलस्य करचरणविन्यासस्य क्रीडासहेलपदाभ्याम्, आलापानां मन्दहासमधुरत्वकथनेन च सौकुमार्यप्रतिपादनाल्ललितमिति भावः । कुतूहलं लक्षयति—**कुतूहलमिति** ॥ उदाहरति—**वीरेति** ॥ अधिरूढ-

आसां स्वरूपमुदाहरणं च ।

आदरादर्शनं चक्षुःप्रीतिरित्यभिधीयते ।

यथा—

*सहि एसो रुद्दणिओ णअणाण अतक्किओस्सओ जाओ ।
मअणो व मुत्तिमंतो चंदो विअ मुक्कलंछणो पुण्णो ॥ १११ ॥

---

* सखि ! एष रुद्रनृपो नयनयोरतर्कितोत्सवो जातः ।
मदन इव मूर्तिमान् चन्द्र इव मुक्तलाञ्छनः पूर्णः ॥

---

सिन्धुरमारूढगजम् । रचितसंक्रमत्वराः कृतगतिवेगाः । उत्सृष्टलीलागतयः इत्यर्थः । तुङ्गसद्मशिखराधिरोहणं हर्म्याग्रारोहणं कुतूहलात् कुर्वते । चकितं लक्षयति—चकितमिति ॥ उदाहरति—अविज्ञातेति ॥ पश्चाद्भागे पादन्यासमान्द्येन अविज्ञातं प्रियानवगतमायातं स्वस्यागमनं यस्य तं तथोक्तम् । हसितुं परिहसितुं परिहासार्थमित्यर्थः । भाल्या सख्याऽप्यकथितं स्वमात्मानं हठाद्यदृच्छया उत्पश्यन्त्याः । भासीनैस्तिष्ठन्त ऊर्ध्वमवलोकयन्त इति भावः । अत एव चकितचकिताश्चकितप्रकारा लज्जोत्कण्ठाभ्यामसकृदावृत्तनिमीलनोन्मीलना इत्यर्थः । तथा उदञ्चिता ऊर्ध्वप्रसारितापाङ्गाश्च दृशो यस्यास्तथोक्तायाः । तल्लक्षणं भावप्रकाशे—'मीलनोन्मीलनावृत्तिर्यत्र तच्चकितं विदुः । अपाङ्गयोरूर्ध्वभागावलोकनमुदञ्चितम् ॥' इति । विलासान् 'तात्कालिको विकारः स्याद्विलासो दयितेक्षणे' इत्युक्तलक्षणान् । वीक्ष्य तथैवालिङ्गनादिसत्कारमननुभूयैवेत्यर्थः । पुनः प्रत्येतुं गत्वा पुनरागन्तुमित्यर्थः । सर्वोऽपि मदनमहोत्सवश्चकितसुखस्य षोडशीमपि कलां नार्हतीति भावः । विहृतं लक्षयति—विहृतमिति ॥ प्राप्तकालस्यावसरोचितस्येत्यर्थः । उदाहरति—प्रतापेति ॥ भुजान्तरस्थितां वक्षःस्थिताम् । अमुना स्तनद्वयेन । स्पृश आलिङ्गेत्यर्थः । इतीत्थमाशिषमुक्त्वेति शेषः । साभिमानं सखीवचनस्येष्टत्वात् सकृत्रिमकोपमित्यर्थः । पश्यति, न पुनः किमपि ब्रूते लज्जयेति भावः । हसितं लक्षयति—आकस्मिकमिति ॥ यौवनादिविकारजं, न तु हास्यवद् वेषभाषादिविकारजमित्यर्थः । अत एवाकस्मिकमहेतुकम् । व्याख्यातमेतत् । उदाहरति—जहेति ॥ अत्र यौवनजन्येन मननोद्दीपकेन मृगाक्षीहसितेन प्रियमनोरथः पृथुलीभवतीति भावः । इत्थं रससामग्रीं निरूप्य शृङ्गारास्पदक्रमनिमित्तभूता द्वादशावस्था निरूपयति—अथेत्यादिना ॥ शृङ्गारस्येति ॥ सामर्थ्यादयोगाख्यविप्रलम्भशृङ्गारस्येत्यर्थः । कामशास्त्रानुसारत इत्यनेन अलंकारशास्त्रे संख्यासंज्ञादौ विशेषोऽस्तीति सूच्यते । अत एवोक्तं भावप्रकाशे—'दशधा मन्मथावस्था भवेद् द्वादशधापि वा । इच्छोत्कण्ठाऽभिलाषाश्च चिन्ता स्मृतिगुणस्तुती ॥ उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च । जाडयं मरणमित्याद्ये द्वे कैश्चिद्वर्जिते बुधैः ॥' इति । अन्ये तु—'दृङ्मनःसङ्गसंकल्पा जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥'

अथ मनःसङ्गः ।

**मनःसङ्गः प्रियतमे नित्यं चित्तस्य विश्रमः ॥ ११२ ॥**

यथा—

*सइ मह मणो विलग्गइ रुद्दणरेन्दम्मि कीस कुविआओ ।
तेणाहं वि विमुक्का सहिओ तुम्हेसु का वत्ता ॥ ११३ ॥

अथ संकल्पः ।

**संकल्पो नाथविषयो मनोरथ उदाहृतः ।**

यथा—

†दरहसिअगब्भिणाइं सिणेहसिणिद्धाइ राअभरिआइ ।
रुद्दणिवविलोइआइं काहे णु मम्मि णिवदंति ॥ ११४ ॥

---

* सदा मम मनो विलगति रुद्रनरेन्द्रे कस्मात् कुपिताः ।
तेनाहमपि विमुक्ता सख्यो युष्मासु का वार्ता ॥

† दरहसितगर्भितानि स्नेहस्निग्धानि रागभरितानि ।
रुद्रनृपविलोकितानि कदा नु मयि निपतन्ति ॥

---

इत्याहुः । तदेतदाह—**केचिदिति** ॥ आसां क्रमेण लक्षणोदाहरणे दर्शयति—**आदरादित्यादिना** ॥ तत्र प्रत्यक्षचित्रस्वप्नादौ सादरं प्रियदर्शनं चक्षुःप्रीतिरित्यर्थः । उदाहरति—**सहीति** ॥ अत्र राज्ञो नेत्रोत्सवत्वादिप्रतिपादनेन तद्दर्शनेऽत्यादरः प्रतीयते । मनस्सङ्गं लक्षयति—**मन इति** ॥ सर्वदा प्रियविश्रान्तचित्तत्वं मनस्सङ्ग इत्यर्थः । उदाहरति—**सईति** ॥ सइ सदा । 'इस्सदादिषु' इति सूत्रेणात्राकारस्येकारादेशः । कस्मात् कुपिताः, यूयमिति शेषः । तेनाहमपि विमुक्ता संनिहितापीति भावः । सख्यो युष्मासु का वार्ता व्यवहितास्विति भावः । तस्मान्न मे युष्मदुपालम्भभाजनत्वमिति भावः । संकल्पं लक्षयति—**संकल्प इति** ॥ उदाहरति—**दरेति** ॥ दरहसितं मन्दस्मितं तद्गर्भितानि संभोगौत्सुक्यसूचकानीत्यर्थः । 'कटाक्षैर्हासगर्भैस्तु संभोगौत्सुक्यभावना' इति वचनात् । स्नेहस्निग्धानि रागभरितानि । स्नेहो नामार्द्रान्तःकरणत्वम् । तदुक्तम्—'मनसो यद् द्रवीभावो विषयेषु ममत्वतः । भयशङ्कावसानात्मा स एव स्नेह उच्यते ॥' इति । तत्प्रकर्षो रागः । तदुक्तम्—'दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । येन स्नेहप्रकर्षेण स राग इति कथ्यते ॥' इति । रुद्रनृपविलोकितानि कदा मयि निपतन्ति । प्रलापं लक्षयति—**प्रलाप इति** ॥ प्रियगुणस्तुतिः प्रलाप इत्यर्थः । उदाहरति—**तहेति** ॥ तथा निपुणो विदग्धः, कृत्यवस्तुषु चतुर इत्यर्थः । तथा मधुरः प्रियदर्शनः प्रियंवदो वा । तथा सुभगो गम्भीरगुणो नायकविशेषः ।

अथ प्रलापः ।

**प्रलापः प्रियसंश्लिष्टगुणालाप उदाहृतः ॥ ११५ ॥**

यथा—

*तह णिउणो तह महुरो तह सुहओ तह अ सोम्मसब्भाओ ।
एक्को रुद्दणिवो विअ इदि गोट्ठी पोढमहिलाणं ॥ ११६ ॥

अथ जागरः ।

**जागरस्तु विनिद्रत्वम् ।**

यथा—

†गमिअं कह कह वि दिणं चंदादवदूसहा णिसा दीहा ।
मअणो वि पुंखिअसरो णिद्दा वि णिवो वि णोवेइ ॥ ११७ ॥

अथ कार्श्यम् ।

**कार्श्यमङ्गस्य तानवम् ।**

---

* तथा निपुणस्तथा मधुरस्तथा सुभगस्तथा च सौम्यस्वभावः ।
एको रुद्रनृप एवेति गोष्ठी प्रौढमहिलानाम् ॥

† गमितं कथं कथमपि दिनं चन्द्रातपदुःसहा निशा दीर्घा ।
मदनोऽपि पुङ्खितशरो निद्रापि नृपोऽपि नोपैति ॥

---

तल्लक्षणं वक्ष्यामः । तथा सौम्यस्वभावः सुशीलः । एको रुद्रनृप एवेति गोष्ठी प्रौढमहिलानाम् । सर्वत्र तथाशब्दः पूर्वानुभवपरः । अत्र निपुणत्वादिगुणयोगात् प्रतापरुद्र एवास्माकमभिगम्य इति प्रौढाङ्गनाः प्रसङ्गं कुर्वन्तीति भावः । अत एवोक्तं **भावप्रकाशे**—'महोदयो महाभाग्यः कृतज्ञो रूपवान् युवा । मानी सुशीलः सुभगो विदग्धो वंशसंभवः ॥ अहर्निद्रो मधुरवागभिगम्यो भवेत् स्त्रिया ॥' इति । रुद्दणिवो विअ, रुद्रनृप एव । 'विअवेअ अवधारणे' इत्यवधारणार्थे विअ वेअ इत्येतौ शब्दौ निपातितौ । जागरं लक्षयति—**जागर इति** ॥ उदाहरति—**गमिअमिति** ॥ गमितं कथंकथमपि दिनं प्रियागमनप्रतीक्षणादिभिरिति भावः । चन्द्रातपदुःसहा निशा अत एव दीर्घा । निद्रापि नोपैति । स्वप्नसमागमस्यापि परिपन्थी जागरहतको जागर्तीति भावः । कार्श्यमाह—**कार्श्यमिति** ॥ उदाहरति—**चन्द्रास्य इति** ॥ **अङ्गुलीयकमिति** ॥ 'जिह्वामूलाङ्गुलेश्छः' इति छप्रत्यये स्वार्थिकः कन्प्रत्ययः । केयूरितमङ्गदीकृतमित्यर्थः । नायिकाऽऽह—**सखीति** ॥ प्रेम्णां प्रेमादीनां प्रियविषयरत्यवस्थाविशेषाणामित्यर्थः । तदुक्तम्—' प्रेमा मानः

यथा—

चन्द्रास्ये! कथमङ्गुलीयकमिदं केयूरितं ते सखि!
प्रेम्णां प्रेयसि वैभवैः स खलु को भूमेः सपत्नी यतः।
ज्ञातं मानिनि! काकतीयनृपतौ सक्ताऽऽलि! सत्यं शुभे!
श्यामाङ्गीं स खलु स्थिरां रमयते त्वां तां च शैलस्तनीम्॥ ११८॥

अथारतिः।

**अन्यत्राप्रीतिररतिः।**

यथा—

*दूसेइ चंदसिट्टिं णिंदइ मलआणिलस्स माहप्पं।
ऊसवपरंमुही सा सुहअ! तुमं किं णु मंतेसि॥ ११९॥

अथ लज्जात्यागः।

यथा—

†लंघिअमहिलासमअं तह भणिअं मअणदुव्विणीदाए।
जह सोऊण गुरुअणो ओसरइ विलज्जिओ दूरं॥ १२०॥

* दूषयति चन्द्रसृष्टिं निन्दति मलयानिलस्य माहात्म्यम्।
उत्सवपराङ्मुखी सा सुभग! त्वं किं नु मन्त्रयसे॥

† लङ्घितमहिलासमयं तथा भणितं मदनदुर्विनीतया।
यथा श्रुत्वा गुरुजनोऽपसरति विलज्जितो दूरम्॥

प्रणयः स्नेहो रागोऽनुरागश्च। अङ्कुरपल्लवकलिकाकोरकफलभोगभागयं क्रमशः॥' इति। 'सप्तमी शौण्डैः' इतिवदाद्यर्थलाभः। प्रेमविषयं पृच्छति—**स खलु क इति**॥ नायिकोत्तरमाह—**भूमेरिति**॥ **यत इति**॥ सार्वविभक्तिकस्तसिः। येनाहं भूमेः सपत्नी भवेयं स इत्यर्थः। सखी नायिकाऽभिप्रायमुद्घाटयति—**ज्ञातमिति**॥ नायिकाऽङ्गीकरोति—**आलीति**॥ भूकल्पायास्तवापि सर्वथा तद्वदेवोपभोगो भविष्यति किमेतेन कार्श्येनेति सखी नायिकामुपलालयति—**शुभ इति**। श्यामाङ्गीं यौवनयुक्ताङ्गीम्, अन्यत्र कृष्णाङ्गीम्। शैलस्तनीं शैलसदृशस्तनीमन्यत्र स्तनायमानशैलामित्यर्थः। अरतिं लक्षयति—**अन्यत्रेति**॥ प्रियव्यतिरिक्तविषयवैराग्यमरतिरित्यर्थः। उदाहरति—**दूसेइति**॥ **सुभग त्वमिति**॥ सुभगो नाम नायकविशेषः। तदुक्तम्—'सपत्नीनखदन्तादिचिह्नं यस्य न दृश्यते। विस्मार्यमाणमानेर्ष्यः सुभगः सोऽभिधीयते॥' इति। अत एवात्र विषयान्तराद्

अथ ज्वरः ।

तापाधिक्यं ज्वरो मतः ॥ १२१ ॥

यथा—

†मोहसिसिरोवआरा वहुआ विरहज्जरेण गुरुएण ।
दाणिं रुद्दणरेसर! कांखइ तुह दंसणामिअअं ॥ १२२ ॥

उन्मादमरणयोः प्रागेवोदाहरणं दर्शितम् ।

अथ मूर्च्छा ।

**मूर्च्छा त्वभ्यन्तरेऽवृत्तिर्बाह्येन्द्रियनिमीलनात् ।**

यथा—

†† चिंतंतीए णरेन्दं दट्ठुं हिअअट्ठिदं मिअच्छीए ।
करणाइ बाहिराइं विसंति अब्भंतरं वि सुण्णाए ॥ १२३ ॥

अथ शृङ्गारः । स द्विविधः । संभोगो विप्रलम्भश्चेति । 'संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः' इति **शृङ्गारतिलके** । संभोगस्य परस्परावलोकन-संभाषणाऽऽलिङ्गनचुम्बनाद्यनेकव्यापारमयत्वेनानन्त्यादेकविधत्वेन गणना कृता ।

---

† मोघशिशिरोपचारा वधूर्विरहज्वरेण गुरुणा ।
इदानीं रुद्रनरेश्वर! काङ्क्षति तव दर्शनामृतम् ॥

†† चिन्तयन्त्या नरेन्द्रं द्रष्टुं हृदयस्थितं मृगाक्ष्याः ।
करणानि बाह्यानि विशन्ति अभ्यन्तरमपि शून्यायाः ॥

---

वैराग्यलिङ्गाभावेन प्रेमास्पदत्वं द्रष्टव्यम् । लज्जात्यागमुदाहरति—**लङ्घिएति** ॥ लङ्घितमहिलासमयं सुरतव्यतिरिक्तकाले लज्जा स्त्रीसमयः । 'किं विलम्ब्यते, चुम्बनादि-कमिहेदानीमेव कर्तव्यम्' इत्यादिकं तथाशब्दार्थः । ज्वरं लक्षयति—**तापेति** ॥ उदाहरति—**मोहेति** ॥ अवस्थाद्वयं व्यभिचारिप्रस्ताव एवोदाहृतमित्याह—**उन्मादेति** ॥ स्थायिभावसहकारित्वेनोपाधिना संचारित्वम् । रसास्वादनिमित्त-त्वेनोपाधिना अवस्थात्वं चेति विवेकः । मूर्च्छां लक्षयति—**मूर्च्छेति** ॥ बाह्येन्द्रियाणां चक्षुरादीनां निमीलनं स्वस्वविषयग्रहणाभावः । अत एवाभ्यन्तरे अवृत्तिः शून्यान्तः-करणत्वमित्यर्थः । उदाहरति—**चिन्तन्तीए इति** ॥ शून्यायाश्चिन्तया शून्यान्तः-करणाया इत्यर्थः । अत्र मूर्च्छाया मोहाख्यसंचारिसमानयोगक्षेमत्वेनोन्मादादिव-दुदाहरणातिदेशार्हत्वेऽपि पृथगुदाहरणं चमत्कारविशेषद्योतनायेति द्रष्टव्यम् । अथ रसविशेषान् उदितोद्देशक्रमानुसारेण विभागपूर्वकं लक्षणोदाहरणाभ्यां दर्शयति—

यथा—

रहः प्रत्यासन्ने हृदयदयिते रुद्रनृपतौ
निवृत्ता मानाज्ञा विरलमपि लज्जाविलसितम् ।
किमन्यत् ते गोप्यं बहिरबहिरानन्दमसृणः
स्मरावेशः कोऽपि प्रियसखि ! नृपेणैकयति माम् ॥ १२४ ॥

विप्रलम्भः पुनरभिलाषेर्ष्याविरहप्रवासहेतुकत्वेन चतुर्विधः ।

**अभिलाषो नाम संभोगात् प्रागनुरागः ।**

यथा—

अन्योन्यभाषणमनङ्गविलासगोष्ठी
शय्या च सार्धमपदानि मनोरथानाम् ।
प्रेमानुविद्धमुदयद्बहुलानुरागं
लभ्येत रुद्रनृपतेरवलोकितं वा ॥ १२५ ॥

**ईर्ष्या नाम नायकस्यान्यासक्तभावात् चित्तविक्रिया ।**

---

**अथेत्यादिना** ॥ तत्र संभोगस्यावान्तरविभागाभावे हेतुमाह—**संभोगस्येति** ॥ **रह इति** ॥ रहःप्रत्यासन्ने विजनमुपगते । हृदयदयिते प्राणवल्लभे । मानः कोपविशेषः; 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति लक्षणात् । तस्याज्ञा तत्परवशत्वमित्यर्थः । लज्जाविलसितमपि विरलं निवृत्तमित्यर्थः । सुरतसमये स्त्रीणां प्रागल्भ्यभूषणत्वादिति भावः । अत्र विस्रम्भविहारविरोधिनोर्लज्जामानयोर्निवृत्तिकथनादुन्मर्यादो विमर्दः संवृत्त इति सूच्यते । तत्फलमाह—**किमिति** ॥ अवक्तव्यं ते नास्तीत्यर्थः । बहिरबहिरानन्दमसृणः विगलितवेद्यान्तरत्वेनापरिच्छिन्नानन्दमय इत्यर्थः । अत एवालौकिकोऽयं स्मरावेशो दुर्निश्चयस्वरूप इत्याह—**कोऽपीति** ॥ किं बहुना । तदानीमावयोः सामरस्यं समजनीत्याह—**नृपेणेति** ॥ एकां करोति एकयति । एकशब्दात् 'तत्करोति—' इति ण्यन्तात् 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानप्रत्ययः । अत्र हृदयदयितपदोदितेनालम्बनविभावेन रहःशब्दसूचितैरुद्दीपनविभावैर्माननिवृत्तिव्यङ्ग्यैर्हर्षादिव्यभिचारिभिरनुक्तिसिद्धैः स्तम्भादिभिरनुभावैश्च परिपोषं प्राप्तः रत्याख्यः स्थायिभावः शृङ्गारतामङ्गीचकारेति वेदितव्यम् । विप्रलम्भं विभजते—**विप्रलम्भ इति** ॥ तत्राद्यं लक्षयति **अभिलाष इति** ॥ अयोगपूर्वानुरागाद्यपरपर्यायो विप्रलम्भविशेषोऽभिलाष इत्यर्थः । उदाहरति—**अन्योन्येति** ॥ अन्योन्यभाषणमिष्टालापरूपं ततोऽनङ्गविलासगोष्ठी नर्मकथाप्रसङ्ग इत्यर्थः । सार्धं शय्या सह शयनं चेत्यर्थः । 'संज्ञायां समज—' इत्यादिना क्यप् प्रत्ययः । अत्र यद्यपि शेरतेऽत्रेति अधिकरणव्युत्पत्त्या शय्याशब्दः खट्वापरो

श्रीकाकतीयनृपतेर्द्विषदङ्गनानां
श्वासोर्मिभिः सपदि मर्मरितान्तरालाः ।
तासां निवासविषये कृतयाचनानां
प्रत्युत्तराणि ददतीव मरौ वनान्ताः ॥ ८७ ॥

क्रियास्वरूपाभावोत्प्रेक्षा यथा—

विमुखे सति काकतिक्षितीन्द्रे वनसीमापि कठोरकण्टकाग्रा ।
चिकुरेषु विकर्षति प्रतीशान् अददानेव निजान्तरप्रवेशम् ॥ ८८ ॥

अत्राददानेति क्रियास्वरूपाभावः । क्रियाहेतूत्प्रेक्षा यथा—

राज्ञां गर्वाङ्कुरोद्भेदाः परिम्लाना दिने दिने ।
काकतीन्द्रप्रतापार्कतीव्रोष्माभिभवादिव ॥ ८९ ॥

अत्रभिभवादिवेति क्रियाहेतुत्वम् । (क्रियाहेत्वभावोत्प्रेक्षा यथा—

कपोलफलकावस्याः कथं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृशीं क्षामतां गतौ ॥ ९० ॥)

क्रियाफलोत्प्रेक्षा यथा—

दम्भोलिसंरम्भमहाजिगोपः प्रस्थानभेरीनिनदोऽन्ध्रभर्तुः ।
लीनानिवान्वेष्टुमरातिवर्गान् विगाहते शैलगुहान्तराणि ॥ ९१ ॥

क्रियाभावफलोत्प्रेक्षा यथा—

---

इति गुणनिमित्तकथनं दानोत्प्रेक्षायाम् । **विमुख इति ॥** प्रतीशान् प्रत्यर्थिभूपतीन् । चिकुरेषु केशेषु । निमित्तात् कर्मसंयोगे सप्तमी । विकर्षतीति क्रिया दानाभावोत्प्रेक्षायां निमित्तम् । एवं निमित्तानुपादानेऽप्युदाहार्यम् । **राज्ञामिति ॥** परिम्लानत्वमुत्प्रेक्षाफलम् । क्रियाहेत्वभावोत्प्रेक्षायाः प्रतिज्ञामात्रमेव नोदाहरणमत्र दृश्यत इत्यन्यतो लिख्यते 'कपोलफलकावस्याः कथं भूत्वा तथाविधौ । अपश्यन्ताविवान्योन्यमीदृशीं क्षामतां गतौ ॥' इति । अत्र दर्शनक्रियाहेत्वभावोत्प्रेक्षा क्षामतागमननिमित्ता । **दम्भोलीति ॥** महाजिर्महायुद्धम्, अन्याभिभव इति यावत् । दम्भोलिसंरम्भमेव महाजि गोपयत्याच्छादतीति तथोक्तः । तिरस्कृताशनिध्वनिरित्यर्थः । **अन्वेष्टुमिवेति ॥** अन्वेषणक्रियाफलोत्प्रेक्षा गुहान्तरगाहनक्रियानिमित्ता । **सीमाद्रीति ॥** सीमाद्रिर्लोकालोकः । कल्पितश्चन्द्रिकाया इवार्घः पूजाविधिर्येषां तान् तथोक्तान्, चन्द्रिकासदृशानित्यर्थः। यशोगानस्यान्धकारासंस्पर्शः फलम् । **चकास्तीति ॥**

सीमाद्रिकुञ्जेषु विहारभाजः सिद्धाङ्गना कल्पितचन्द्रिकार्थान् ।
श्रीवीररुद्रस्य यशोविलासान् गायन्त्यसंस्प्रष्टुमिवान्धकारम् ॥ ९२ ॥

अत्रासंस्प्रष्टुमिवेति क्रियाभावस्य फलत्वम् ।

गुणस्वरूपोत्प्रेक्षा यथा—

चकास्ति काकतीन्द्रस्य कृपालोकनविभ्रमः ।
प्रकृतिष्वपि सर्वासु प्रसाद इव मूर्तिमान् ॥ ९३ ॥

गुणाभावस्वरूपोत्प्रेक्षा यथा—

प्रतापरुद्रस्य महाभिषेकपयःकणैः शीतलिताखिलाङ्गा ।
प्रशान्तभारार्तफणीन्द्रगाढश्वासानिलोष्मेव विभाति पृथ्वी ॥ ९४ ॥

अत्र प्रशान्तोष्मेति गुणाभावः । गुणहेतूत्प्रेक्षा यथा—

जयश्रियामाश्रयतामुपेतः (ति) श्रीवीररुद्रस्य रणे कृपाणः ।
जयश्रियं वैरिमहीपतीनां समुत्सुको हर्तुमसूययेव ॥ ९५ ॥

अत्रासूययेवेति गुणस्य हेतुत्वम् । गुणाभावहेतूत्प्रेक्षा यथा—

जाता वयं संप्रति वीररुद्रनरेन्द्रगम्भीरिमगुल्फदघ्नाः ।
इत्यप्रमोदादिव जीवनेषु मालिन्यमम्भोनिधयो भजन्ति ॥ ९६ ॥

अत्राप्रमोदादिवेति गुणाभावस्य हेतुत्वम् । गुणफलोत्प्रेक्षा यथा—

---

प्रकृतिषु प्रजासु प्रसादगुणस्य मूर्तिमद्विशेषणादुत्प्रेक्षालाभः । निमित्तमत्र नोक्तम् । **प्रतापेति** ॥ अन्यत्र धर्मिणि धर्म्यन्तरोत्प्रेक्षा । अत्र तु भूरूपे धर्मिण्यूष्मप्रशान्तिलक्षणो धर्म उत्प्रेक्ष्यते । तत्र शीतलाङ्गत्वं निमित्तमुपात्तम् । **जयेति** ॥ विशिष्टवस्तुसंग्रही लेशतोऽपि तस्यान्यत्रावस्थानं न सहत इति भावः । अत एवोपात्तनिमित्तेयं गुणहेतूत्प्रेक्षा । **जाता इति** ॥ पार्श्वनिस्सृतौ पादग्रन्थी गुल्फौ, तद्दघ्नास्तत्प्रमाणाः । 'प्रमाणे द्वयसच्—' इत्यादिना दघ्नच्प्रत्ययः । नरेन्द्रगम्भीरिम्णो गुल्फदघ्नाः तदपेक्षयाऽतिस्वल्पगाम्भीर्या इत्यर्थः । जीवनेषूदकेषु वृत्तिषु च । मालिन्यं कार्ष्ण्यं क्लिष्टत्वं च भणन्ते । अत्राप्रमोदादिवेति गुणहेत्वभावोत्प्रेक्षाया न श्लेषो बाधकः; किं त्वङ्गमेव । तदुक्तं **रुचकेन**—'एषा चार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचित् दृश्यते' इति । **चक्रवर्तिनाप्युक्तम्**—'क्वचिच्छ्लेषेणैषा न बाध्यते' इति । **आशिषामिति** ॥ विषधूम्राणां विषमलिनानामाशिषां दंष्ट्राणाम् । 'आशीरुरगदंष्ट्रायाम्' इति **विश्वः** । गुणगाननिमित्तां गुणभावफलोत्प्रेक्षां योजयति—**अत्रेति** ॥ **अरण्येति** ॥ शरणे रक्षणे साधुः शरण्यः, तद्रहिता अशरण्याः, अनाथा इत्यर्थः । **अवैरार्थमिवेति** ॥

आशिषां विषधूम्राणां नैर्मल्यार्थमिवोत्सुकाः ।
भुजङ्गयः काकतीन्द्रस्य गुणान् गातुं सुधामुचः ॥ ९७ ॥

अत्र नैर्मल्यार्थमिति गुणस्य फलत्वम् । गुणाभावफलोत्प्रेक्षा यथा—

अरण्यवासार्जितबान्धवासु मृगीष्ववैरार्थमिवाशरण्याः ।
त्रिलिङ्गदेशेश्वरवैरिनार्यः पराङ्मुखा लोचनविभ्रमेषु ॥ ९८ ॥

अत्रावैरार्थमिति गुणाभावस्य फलत्वम् । द्रव्यस्वरूपोत्प्रेक्षा यथा—

न नित्यमस्मिन् परिपूर्णतेति त्यक्त्वा नभः क्षोणितलावतीर्णः ।
आनन्दयन्निन्दुरिव स्वधाम्ना विभाति लोके नवकाकतीन्द्रः ॥ ९९ ॥

द्रव्यस्वरूपाभावोत्प्रेक्षा यथा—

अनन्यसाधारणदानशौण्डे सद्यःकृतार्थीभवदर्थिसार्थे ।
श्रीकाकतीन्द्रे भुवि राजमाने द्यौः पारिजातेन विनाकृतेव ॥ १०० ॥

अत्र दिवः पारिजाताभाव उत्प्रेक्ष्यते । द्रव्यहेतूत्प्रेक्षा यथा—

प्रतापरुद्रदेवेन क्ष्माभृत्पक्षविजृम्भितम् ।
समुन्मूलितमामूलादपरेणेव वज्रिणा ॥ १०१ ॥

द्रव्यहेत्वभावोत्प्रेक्षा यथा—

काकतीयप्रतापोष्मविलीनाङ्गेन मेरुणा ।
असुवर्णाचलेनेव विरिञ्चिर्व्याकुलीकृतः ॥ १०२ ॥

अत्रासुवर्णाचलेनेति हेत्वभावः । द्रव्यफलोत्प्रेक्षा यथा—

---

विलासविमुखा मृगाङ्गना विलासिनीर्विलोक्य वैरायन्ते तन्निषेधार्थमिवेत्यर्थः । विभ्रमविमुखत्वमत्र निमित्तम् । **नेति** ॥ अस्मिन् नभसि । नवो गुणैरपूर्वः काकतीन्द्रः । अत्रेन्दोः क्षोणितलावतीर्णस्य कविकल्पितत्वादुत्प्रेक्षाविषयत्वमेकत्वाद् द्रव्यत्वं च । **अनन्येति** ॥ दानशौण्डो बहुप्रदः । 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' **इत्यमरः** ॥ अस्यानन्यसाधारणत्वमर्थाद् दान इति लभ्यते । उभयोः खञ्जकुब्जादिवद्विशेषणसमासः । यद्वा तादृशदाने शौण्डो मत्तः, निःसीमवितरणे निर्विचार इत्यर्थः । पारिजातस्तावदेक एव । तस्य राजरूपतया भूलोके वर्तमानत्वात् कुतो दिवः पारिजात इति भावः । **प्रतापेति** ॥ क्ष्माभृत्पक्षविजृम्भितं वैरिभूपालबलविजृम्भणम्; अन्यत्र पर्वतपक्षविजृम्भणम् । अत एवापरेणेव वज्रिणेति श्लेषाङ्गा द्रव्यहेतूत्प्रेक्षा । अत्रापरशब्दाप्रयोगे शब्दमात्रसाधर्म्याच्छ्लेष एव स्यात् । अर्थसाधर्म्ये त्विन्द्रस्य सिद्धतया

दुग्धार्णवशतायेव कैलासाचलकोटये ।
नूनं प्रतापरुद्रेण यशो दिक्षु प्रसारितम् ॥ १०३ ॥

अत्र दुग्धार्णवशतायेति द्रव्यस्य फलत्वम् ।

द्रव्याभावफलोत्प्रेक्षा यथा—

वीररुद्रनरेन्द्रस्य जयप्रस्थानसंभवम् ।
रजः पिहितदिग्गोलं निराकाशमिव स्थितम् ॥ १०४ ॥

अत्र निराकाशमित्याकाशाभावाय इत्यर्थः । एवं भेदान्तरं यथासंभवमुदाहार्यम् ।

इत्यौपम्यगर्भालंकारविवेचनम् ।

## अतिशयोक्त्यलंकारः ।

**विषयस्यानुपादानाद्विषय्युपनिबध्यते ।**
**यत्र साऽतिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता ॥ १०५ ॥**

यत्र कविप्रौढोक्त्या विषयतिरोधानेन विषयी निबध्यते साऽतिशयोक्तिः । तस्याश्चातुर्विध्यम्—भेदेऽभेदः, अभेदे भेदः, संबन्धेऽसंबन्धः, असंबन्धे संबन्धश्चेति । कार्यकारणयोः पौर्वापर्यविपर्ययरूपा त्वनध्यवसायमूलत्वाद् व्यतिरिक्तैव । किं तु प्रौढोक्तिमूलत्वादतिशयोक्तिरिति कथ्यते । तत्र भेदेऽभेदो यथा—

---

प्रतीतेरुपमैव । तत्प्रयोगे तु प्रकृतो राजैवापरवज्रित्वेनाध्यवसीयते । तस्यैवशब्देन साध्यत्वात् प्रतीतावपि उत्प्रेक्षैव । इवशब्दाप्रयोगे तु सिद्धत्वादध्यवसायस्यातिशयोक्तिः । इवापरशब्दयोरुभयोरप्यप्रयोगे रूपकमित्यादिविशेषा यथासंभवमूहनीयाः । **काकतीयेति** ॥ विलीनाङ्गेन द्रवीभूतावयवेन । असुवर्णाचलेन सुवर्णाचलाभावेनेत्यर्थः । अत्राभाववाचिनो नञः क्रियासापेक्षत्वेनासमर्थस्यापि 'सुडनपुंसकस्य' इति ज्ञापकात् क्वचित् समास इष्यते । यदाह **कैयटः**—'असमर्थनञ्समासस्य क्वचित् साधुत्वज्ञापनायानपुंसकस्येति प्रसज्यप्रतिषेध आश्रीयते' इति । **दुग्धार्णवेति** ॥ नूनमित्येतत् द्वितीयोत्प्रेक्षासाधकम् । **वीररुद्रेति** ॥ आकाशस्याभावो निराकाशम् । अर्थाभावेऽव्ययीभावः । ततश्चतुर्थ्याः 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' इत्यम्भावः । 'कस्तूरीतिलकन्ति फालफलके देव्या मुखाम्भोरुहे' इत्यादावुपमोपक्रमोत्प्रेक्षा । 'यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति शिप्रा' इत्यादौ सापह्-

स्थाने कल्पतरुर्जातः काकतीयकुलोदधेः ।
लक्ष्मीपतिरसौ चित्रं मर्त्यलोकमहोत्सवः ॥ १०६ ॥

अत्र प्रतापरुद्रकल्पवृक्षयोरभेदाध्यवसायः । अभेदे भेदो यथा—

औन्नत्यं महदन्यदेव महितः कोऽप्येष गम्भीरिमा
काऽप्यन्या सरणिः प्रतापयशसोरन्यैव बाह्वोः प्रथा ।
सर्वं नूतनमेव रुद्रनृपतेर्जाने न तन्निर्मितौ
सामग्री चतुराननेन कियती कीदृक्क्रमा कल्पिता ॥ १०७ ॥

अत्रौन्नत्यादेर्वास्तवाभेदेऽपि भेदः कल्पितः । ततः स्वतःसिद्धकविप्रौढोक्तिसिद्धयोरौन्नत्ययोर्भेदेऽपि अभेदाध्यवसायः ।

संबन्धेऽसंबन्धो यथा—

शिला चिन्तारत्नं, तरुरमरशाखी, पशुरसौ
वियद्धेनुः, सर्वं जगदपि तथा दोषविधुरम् ।
न सृष्टिर्वैधात्री तदिह चतुरश्रीः कथमियं
स्पृशेदेवं रुद्रं सकलगुणसाम्राज्यनिलयम् ॥ १०८ ॥

अत्र विधातृसृष्टिसंबन्धेऽप्यसंबन्ध उक्तः । अतीतब्रह्मसृष्टिनेश्वरेणात्राभेदाध्यवसायः । असंबन्धे संबन्धो यथा—

---

वोत्प्रेक्षेत्यादिकं तु स्वयमूहनीयमित्याह—**एवमिति** ॥ इत्थं साध्यवसायमूलामुत्प्रेक्षां निर्णीय सिद्धाध्यवसायमूलामतिशयोक्तिं लक्षयति—**विषयस्येति** ॥ यत्र विषयप्रकृतश्चन्द्रादिरुपनिबध्यते, प्राधान्येनेति शेषः । कुतः? विषयस्य प्रकृतस्य मुखादेरनुपादानात्, विषयिणा निगीर्णत्वादित्यर्थः । इदमत्रानुसंधेयम् । अध्यवसाये त्रयं संभवति—विषयो विषयी अध्यवसानव्यापारात्मकं स्वरूपं च । तत्र विषयस्य निगीर्णत्वेन स्वरूपप्रतिपत्तेरेवाभावादध्यवसाये न कुत्रापि प्राधान्यशङ्कावकाशः । नूनमादिशब्दैरध्यवसायेन व्यापारप्राधान्ये तूत्प्रेक्षा दर्शिता । नूनमादिशब्दाप्रयोगे विषयिण एव प्राधान्येऽध्यवसायस्य सिद्धत्वादतिशयोक्तिरिति । अत एवोक्तं **रुचकेन**—'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' इति । इदं रजतमित्यस्यातिशयोक्तिता मा भूदित्युक्तम्—**कविप्रौढोक्तिजीवितेति** ॥ विभागमाह—**तस्या इति** ॥ ननु पञ्चमस्यातिशयोक्तिभेदस्य संभवात् कथं चातुर्विध्यमित्याशङ्क्याह—**कार्यकारणयोरिति** ॥ **काव्यप्रकाशकारोक्तवैषम्यं त्वस्मदुपाध्यायैरेकावलीतरले** समाहितमिति नेह प्रपञ्च्यते । क्रमेणोदाहरति—**स्थान इति** ॥

ब्रह्मन्! मेरुगिरौ कृतेऽपि किमिदं नैवंविधास्ते मुदः
स्वामिन्! सत्यमधिक्रियाऽद्य फलिता यद्वीररुद्रः कृतः।
मिथ्या किं नु विकत्थसे त्रिजगतस्त्राणाय मत्प्रार्थितः
शंभुः क्ष्मामवतीर्णवानिति कथा जाता हरिब्रह्मणोः॥ १०९॥

अत्र हरिब्रह्मणोरेवंविधगोष्ठ्यसंबन्धेऽपि संबन्ध उक्तः। शंभुना सह काकतीन्द्रस्याभेदाध्यवसायः। कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिर्यथा—

मातः! कथं काकतिनाथदृष्टेरग्रेसराः कामशराः पतन्ति।
तद्रूपलावण्यजितः स्मरोऽपि नूनं गतः किंकरताममुष्य॥ ११०॥

अत्र कार्यभूतस्य स्मरशरपातस्य कारणभूतात् प्रियदृष्टिपातात् पूर्वकालत्वमुक्तम्।

## सहोक्त्यलंकारः।

अथोक्तिसाम्यालंकारनिरूपणेऽतिशयोक्तिहेतुका सहोक्तिर्निरूप्यते।

**सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः।**
**कल्पितौपम्यपर्यन्ता सा सहोक्तिरितीष्यते॥ १११॥**

---

कल्पतरोरुदधेरुत्पत्तिरुचिता, किं तु लक्ष्मीसोदरस्यामर्त्योपयोगिनस्तस्येदमद्भुतमिति भावः। **औन्नत्यमिति॥** व्याख्यातमेतत्। अत्र राजमेर्वादिसंबन्धिनोरौन्नत्यायोर्वास्तवाभेदेऽप्यन्यदेवेत्यादिना काल्पनिको भेदः प्रतिपाद्यत इत्याह—**अत्रेति॥** तर्ह्यस्मिन् भेदे नाध्यवसायलक्षणानुगतिरत आह—**स्वत इति॥** स्वतःसिद्धं यदौन्नत्यं तदेवान्यदेवेति कविप्रौढोक्त्या सातिशयम्। अतः स्वतःसिद्धप्रौढोक्तिसिद्धयोरौन्नत्ययोः फलरूपयोर्भेदेऽप्यभेदाध्यवसायः, वास्तवभेदे सत्यभेदाध्यवसायकल्पनायोगात्। तदुक्तं **चक्रवर्तिना**—'अभेदाध्यवसायो हि फलेऽतिशयनादिह। न पुनः फलिनोस्तत्र भेदेऽभेदो न सिध्यति॥' इति। किं च प्रथमोदाहरणेऽपि स्वतःसिद्धप्रौढोक्तिसिद्धवदान्यत्वयोरेवाभेदाध्यवसायो न राजकल्पवृक्षयोः। अन्यथैकत्र फलयोरध्यवसायोऽन्यत्र फलिनोरिति वैरूप्यप्रसङ्गात्। एवं च 'प्रतापरुद्रकल्पवृक्षयोरभेदाध्यावसाय' इति यत् पूर्वमुक्तं—तत् फलगताभेदाध्यवसायविषयमिति द्रष्टव्यम्। **शिलेति॥** यथा चिन्तारत्नादिकं शिलात्वादिदोषदुष्टं, तथा सर्वमपि जगदिति दुष्टेयं ब्रह्मसृष्टिः कथमनवद्याशेषगुणमेनं संस्पृशेदिति रुद्रदेवस्य ब्रह्मसृष्टिसंबन्धेऽप्यसंबन्धकथनम्। अत्राध्यवसायं संपादयति—**अतीतब्रह्मसृष्टिनेति॥** अयं च स्वतःसिद्धप्रौढोक्तिसिद्धगुणातिशयाध्यवसायमूल इति द्रष्टव्यम्। **ब्रह्मन्निति॥** हरिवाक्यमेतत्। विरिञ्चिरुत्तरमाह—**स्वामिन्निति॥** अधिक्रिया जगत्सर्जनाधिकारः। विष्णुर्विरिञ्चि-

यत्र भेदेऽभेदरूपया कार्यकारणपौर्वापर्यविपर्ययरूपया वाऽतिशयोक्त्या एकस्य प्राधान्येनान्वयेऽपरस्य सहार्थेन संबन्धे उपमानोपमेयभावः कल्प्यते तत्र सहोक्तिः । प्राकरणिकाप्राकरणिकविषयत्वादुपमानोपमेयभावस्य सहार्थसंबन्धेन द्वयोरपि प्रकृतत्वान्न तदात्मता ।

कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूला सहोक्तिर्यथा-

अन्ध्रक्ष्माभृत्सुभटासिधारा रणेषु नीलोत्पलपत्रभासः ।
पतन्ति कण्ठेष्वरिभूपतीनां साकं सुरस्त्रीजनमुक्तमाल्यैः ॥ ११२ ॥

अत्र कृपाणपतनोत्तरकालभाविनो दिव्यमाल्यपतनस्य सहकालत्वमुक्तमिति पौर्वापर्यविपर्ययः । भेदेऽभेदरूपातिशयोक्तिः श्लेषगर्भभेदाध्यवसायरूपा चारुत्वातिशयहेतुः । तन्मूला यथा—

दिने दिने रुद्रनराधिपस्य प्रतापलक्ष्मीरुदयं प्रयाति ।
प्रकाशिताशेषदिगन्तराला विवस्वता सार्धमनिन्द्यभासा ॥ ११३ ॥

अत्रोदयं प्रयातीति श्लेषेणोदयपर्वताभ्युदययोरभेदाध्यवसायः ।

## विनोक्त्यलंकारः ।

अथ सहोक्तिप्रतिपक्षरूपा विनोक्तिर्निरूप्यते ।

---

कथनमन्यथा करोति—मिथ्येति ॥ अत्रालौकिकौन्नत्यादिगुणयुक्तमेनं ब्रह्मापि निर्मातुं न शक्नोतीति भावः । असंबन्धे संबन्धं योजयति—अत्रेति ॥ पूर्ववदभेदाध्यवसाय इत्याह—शम्भुनेति ॥ पञ्चमं भेदमुदाहरति—मातरिति ॥ कामशरपीडामसहमानायाः कस्याश्चिन्मात्रा सह वचनम् । तस्य काकतीन्द्रस्य । अभूषणेऽपि भूषितवद्भासमान आकारो रूपम्, लावण्यं कान्तिविशेषः । अनयोर्लक्षणमुक्तम् । अमुष्य काकतीन्द्रस्य । कारणं पूर्वम्, अपरं कार्यमिति सर्वत्र नियमः । कविप्रौढोक्त्या तद्विपर्ययोऽलंकार इत्याशयेनाह—अत्रेति ॥ 'अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः । अयमागच्छति कालो हन्त हताः पथिकगेहिन्यः ॥' इत्यादि कार्यकारणयौगपद्यमपि पौर्वापर्यविपर्यय एवेति द्रष्टव्यम् । सहोक्तेः संगतिमाह—अथेति ॥ लक्षणमाह—सहार्थेनेति ॥ सहशब्दस्यार्थो यस्य तेन सहार्थेन । तत्पर्यायेण चेत्यर्थः । 'अनेन सार्धं विहराम्बुराशेः' इत्यादौ सहोक्तिमात्रस्यालंकारता मा भूदित्युक्तम्—अतिशयोक्तित इति ॥ अत्राकाङ्क्षितमंशमध्याहारादिभिः पूरयन् व्याचष्टे—यत्रेति । एकस्य प्राधान्येनान्वय इति ॥ यथा पुत्रेण सहागतः पितेत्यादौ पितुरागमनादिना शाब्दः संबन्धस्तद्वदिति भावः । अपरस्य सहार्थेन

**विना संबन्धि यत्किंचिद्यत्रान्यस्य पराभवेत् ।**
**अरम्यता रम्यता वा सा विनोक्तिरिति स्मृता ॥ ११४ ॥**

यत्र कस्यचिदसंनिधानाद्वस्तु रम्यमरम्यं वा भवेत् सा विनोक्तिः । सा द्विविधा—अरम्यता, रम्यता चेति । अरम्यता यथा—

प्रतापरुद्रदेवस्य गुणवर्णनया विना ।
कीदृशी काव्यरचना संश्रृणुध्वं कवीश्वराः ॥ ११५ ॥

अत्र प्रतापरुद्रगुणवर्णनेन विना काव्यश्रियोऽशोभनत्वमुक्तम् । अनेन काव्यशोभामिच्छद्भिः कविभिः प्रतापरुद्रगुणा वर्णयितव्या इति विधिरेव प्रकाश्यते । रम्यता यथा—

कलापूर्णे नित्यं जयति जगतीन्दौ त्रिजगतो
वपुष्मत्यानन्दे विमलविभवे रुद्रनृपतौ ।
विना लक्ष्म प्राप्य प्रतिदिवसपूर्णां निजतनुं
प्रकाशः स्यादिन्दुर्यदि दिवि भवेत् सोऽपि सुभगः ॥ ११६ ॥

---

**संबन्ध इति** ॥ तत्रैव पुत्रादिवदिवदिति भावः । **उपमानोपमेयभावः कल्प्यत इति** ॥ 'सहयुक्तेऽप्रधाने' इत्यप्रधाने तृतीयाविधानात् तदन्तस्य गुणभावादुपमानत्वम् । अर्थादितरस्य प्राधान्यादुपमेयत्वं च कल्प्यत इत्यर्थः । अत एवात्र भेदप्रधानं साधर्म्यमिति द्रष्टव्यम् । 'सह शाखया प्रस्तरं प्रहरति' इत्यत्र प्रहरणे शाखाप्रस्तरयोरिव शाब्द एवायं गुणप्रधानभावो न वास्तवः, पित्रा सहागत पुत्र इत्यपि सुवचत्वात् । उपमानोपमेयभावश्चात्र काल्पनिको न वास्तव इत्यत्र निमित्तमाह—**प्राकरणिकेति** ॥ तदात्मता अप्रकृतरूपता । उदाहरति—**अन्ध्रेति** ॥ अत्र दिव्यमाल्यानीव खड्गधाराः कण्ठेषु पतन्तीत्येवं प्रतीयमानस्योपमानोपमेयभावस्य द्वयोः प्राकरणिकत्वात् वैवक्षिकत्वम् । कण्ठपतनसाधर्म्यस्य भेदप्रधानकत्वं चोपमानोपमेययोः सहार्थप्रयुक्तगुणप्रधानभावनिबन्धनमित्याद्यूह्यम् । अत्र कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूलत्वमुपपादयति—**अत्रेति** ॥ **दिने दिन इति** ॥ श्लेषभित्तिकाभेदाध्यवसायोऽत्र सहोक्तिमूलमित्याह—**अत्रोदयमिति** ॥ 'कुमुददलैः सह संप्रति विघटन्ते चक्रवाकमिथुनानि' इत्यत्र श्लेषभित्तिकाभेदाध्यवसायो मूलम् । अत्र 'विघटनं संबन्धिभेदात् भिन्नम्, न तु श्लिष्टम्' इत्याह **सर्वस्वकारः** । 'उत्क्षिप्तं सह कौशिकस्य पुलकैः' इत्यादौ इयं मालयापि दृश्यते । अत्र कर्मसाहित्यात् सहोक्तिः, पूर्वत्र कर्तृसाहित्यादिति भेदः । विनोक्तेः संगतिमाह—**अथेति** ॥ लक्षणमाह—**विनेति** ॥ यत्र संबन्धि यत् किंचिद्वस्तु विना अन्यस्य प्रतिसंबन्धिनो रम्यता शोभनत्वमरम्यता अशोभनत्वं वा पराभवेन्निवर्तेत सा

अत्र प्रतापरुद्रे प्रकाशमाने चन्द्रमसः कलङ्केन विना शोभनत्व-मुक्तम् । सकलगुणशालिनः प्रतिपक्षस्य पुरस्तात् तादृशगुणवत्तयैव रम्यता, नान्यथेति ।

## समासोक्त्यलंकारः ।

**विशेषणानां तौल्येन यत्र प्रस्तुतवर्तिनाम् ।**
**अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥ ११७ ॥**

यत्र प्रकृतविशेषणसाम्यादप्रस्तुतं गम्यते सा समासोक्तिः । तत् त्रिविधम्—श्लिष्टविशेषणसाम्यं, साधारणम् , औपम्यगर्भं चेति ।

श्लिष्टविशेषणसाम्यं यथा—

सद्यो विश्लथमेखलां पुलकितामृज्वीं तनुं बिभ्रती
रागादन्ध्रपतेः कृपाणलतिका गृह्णाति कण्ठेश्वरीन् ।
तद्योगादनुरक्तभावविवशाः संमीलिताक्षाश्चिरं
शून्यान्तःकरणा भजन्ति खलु ते भावस्थितिं कामपि ॥ ११८ ॥

---

विनोक्तिरित्यर्थः । फलितं व्याचष्टे—**यत्रेति** ॥ रम्यमरम्यतारहितम् , अरम्यं रम्यतार-हितं वेत्यर्थः । व्याख्यानोक्तं व्युत्क्रमं परिहरन् विभजति—**सेति** ॥ रम्यत्वाभावः अरम्यत्वाभावश्चेत्यर्थः । कस्मिंश्चित् सति कस्यचिद्रम्यत्वमरम्यत्वं वेति विधिमुखेनापि विच्छित्तिविशेषो नास्तीत्येवमभिधानमिति द्रष्टव्यम् । तदुक्तम्—'सदसत्त्वनिवृत्तिश्चे-न्निवृत्त्याऽन्यस्य वर्ण्यते । तदा द्विधा विनोक्तिः स्याद्विधिरत्र फलं भवेत् ॥' इति । आद्यमुदाहरति—**प्रतापेति** ॥ कीदृशी, रम्या न भवतीत्यर्थः । संशृणुध्वं व्याख्यातम् । अलंकारफलं विधिमाह—**अनेनेति** ॥ द्वितीयमुदाहरति—**कलेति** ॥ जगतीन्दौ भूलोकचन्द्रे रुद्रनृपतौ कलापूर्णत्वादिविशेषणैः प्रतीयमानेन चन्द्रादुत्कर्षेण जयति सति इन्दुः कलङ्कराहित्येन नित्यं पूर्णः प्रकाशत इति प्रकाशः प्रकाशमानो दिवि यदि स्याद् भूलोके त्वेतत्संनिधानेन तथाविधोऽपि न शोभत इति भावः । स चन्द्रोऽपि सुभगो भवेदित्यशोभनत्वाभावकथनम् । तदेवाह—**अत्रेति** ॥ सहोक्ति-विनोक्त्योः सहार्थविनार्थयोरभावेऽपि तदर्थविवक्षायामुदाहरण**मलंकारसर्वस्वादौ** द्रष्टव्यम् । उक्तिसाम्यात् समासोक्तिं लक्षयति—**विशेषणानामिति** ॥ स्पष्टम् । समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः । विशेषणसाम्यं विभजते—**तदिति** ॥ यत्र सकृदुच्चारितशब्देनार्थद्वयं प्रतीयते तच्छ्लिष्टम् । यत्रोभयप्रवृत्तिनिमित्तैक्यं तत् साधारणम् । यत्रौपम्यगर्भसमासविशेषाश्रयणं तदौपम्यगर्भम् । तेन समासोक्तिरपि त्रिविधा । तत्राद्यं भेदमुदाहरति—**सद्य इति** ॥ विश्लथा प्रयोगानुकूला मेखला कण्ठरज्जुर्यस्यास्तां तथोक्तां, शिथिलकाञ्चीगुणां च । पुलकाश्छाया अस्याः संजाताः

अत्र विश्लथमेखलां पुलकितामिति श्लिष्टविशेषणमहिम्ना कृपाणलतिकाया नायिकात्वप्रतीतिः । अनुरक्तभावविवशा इत्यादिविशेषणद्वारा रिपूणां नायकत्वप्रतीतिः । साधारणविशेषणेन यथा—

वीतव्रीडमपास्तमानमुदयद्वैस्वर्यमाविर्भव-
त्स्वेदं निर्भरगात्रवेपथु मिलन्मूर्च्छं गलद्बाष्पकम् ।
संजातप्रलयं च काकतिमहीनाथ ! स्मरोद्वेजिता
भूपाः शैलगुहासु यान्ति विजनं भीत्या समालिङ्गिताः ॥ ११९ ॥

अत्र शृङ्गारभयानकसाधारणविशेषणबलाद् भीत्या समालिङ्गिता इति नृपाणां नायकत्वप्रतीतिः । औपम्यगर्भविशेषणेन यथा—

भृतात्मा गुणरत्नौघैः पूर्णः सौजन्यवारिणा ।
प्रतापरुद्रनृपतिर्धत्ते विश्वंभराश्रियम् ॥ १२० ॥

अत्र समासोक्तौ सर्वत्र व्यवहारसमारोप एव जीवितम् । स चतुर्विधः । लौकिके वस्तुनि लौकिकव्यवहारसमारोपः, शास्त्रीयवस्तुव्यवहारसमारोपश्चेति द्विविधः ; तथा शास्त्रीयवस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः, लौकिकवस्तुव्यवहारसमारोपश्चेति । एवं चतुर्विधः । यथाक्रममुदाहरणानि ।

---

पुलकिता रोमाञ्चिता च ताम् । ऋज्वीमकुटिलां रताववामां च । तद्योगात् कृपाणलतिकासंबन्धात् । अनुरक्तोऽनुवृत्तरक्तो भावः स्वरूपं ते तथोक्ताः, अत एव विवशाः परवशाः । अन्यत्र तद्योगान्नायिकासंबन्धादनुरक्तभावेनानुरक्तत्वेन विवशाः मीलिताक्षा मूर्च्छया सुखपारवश्याच्च । तथा शून्यान्तःकरणा गतमनसो विगलितवेद्यान्तःकरणाश्च । कामपि वक्तुमयोग्यां साक्षादुक्तावमङ्गलत्वेनाश्लीलत्वादिति भावः । भावस्थितिं षष्ठभावविकारं, विनाशमित्यर्थः । अन्यत्र कामपि वक्तुमशक्यां भावस्थितिं प्रेमानुबन्धं भजन्ति । अत्र श्लिष्टविशेषणसाम्यात् खड्गलतायामरिषु नायिकानायकव्यवहारसमारोप इत्याह—**अत्रेति** ॥ द्वितीयमुदाहरति—**वीतेति** ॥ व्याख्यातमेतत् । अत्र वीतव्रीडादिविशेषणानामुभयत्रैकार्थत्वं साम्यं, तद्बलाद्भीरूणां शृङ्गारनायकव्यवहारसमारोप इत्याह—**अत्रेति** । व्रीडव्ययादिधर्मसमारोपोऽत्र निमित्तम् । 'द्यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब' इत्यत्रेक्षणाग्नौ युवनायकव्यवहारारोपे आलिङ्गनादिकार्यसमारोपः कारणं ; साधारणविशेषणसाम्ये धर्मकार्ययोरन्यतरारोपं विना व्यञ्जनव्यापारोद्भेदनेनाप्रकृतप्रतीतेरसंभवात् । एवं च द्वितीयो भेदो द्विविधो जातः । तृतीयमुदाहरति—**भृतात्मेति** ॥ गुणा रत्नानीवेत्युपमितसमासस्य गुणा एव रत्नानीति रूपकसमासस्य च साधकबाधकाभावात् सन्देहसंकरः, ततो गुणसदृशै रत्नैरिति मध्यमपदलोपी समासः । एवमुत्तरत्रापि । इत्थमौपम्यगर्भ-

समाङ्गस्फुरदुद्दामदानलक्ष्मीविराजितः ।
प्रतापरुद्रो भद्रात्मा तनुते सार्वभौमताम् ॥ १२१ ॥

अत्र लौकिके प्रकृतवस्तुनि लौकिकस्य सार्वभौमनामधेयस्य दिग्गजस्य व्यवहारप्रतीतिः । तथा—

गुरुप्रमाणेन निजेन सद्यस्तिरस्कृतोद्यत्प्रतिपक्षहेतौ ।
प्रतापरुद्रस्य समित्युदग्रे खड्गे महत्खण्डनपण्डितत्वम् ॥ १२२ ॥

अत्र लौकिके खड्गे तर्कशास्त्रप्रसिद्धवस्तुव्यवहारसमारोपः ।

तथा—

अपूर्वार्थश्लाघागुरुभणितसारस्यपदवी
श्रुतिग्राह्यं तत्त्वं किमपि कलयन्ती प्रतिपदम् ।
प्रबन्धश्रीर्वीरक्षितिभुजि कवीनां विजयते
बुधश्रेणी यस्यां निपुणमधिकर्तुं प्रभवति ॥ १२३ ॥

---

विशेषणसाम्येन प्रतापरुद्रे समुद्रव्यवहारप्रतीतेः समासोक्तिः । यत्रोपमासमासे साधकमस्ति, यथा 'दन्तप्रभापुष्पचिता लोलाक्षी चारुहासिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥' इत्यत्र सुवेषत्वं—तत्रोपमासमासानन्तरं मध्यमपदलोपिसमासो द्रष्टव्यः । तथा च तृतीयभेदस्यापि द्वैविध्यं सिध्यतीत्येवं पञ्चप्रकारा समासोक्तिः । तदुक्तम**लंकारसर्वस्वे**—'तदेवं श्लिष्टविशेषणसमुत्थापितैका । साधारणविशेषणसमुत्थापिता धर्मकार्यसमारोपाभ्यां द्विधा । औपम्यगर्भविशेषणसमुत्थापिता तूपमासंकरसमासाभ्यां द्विभेदा ' इति ; यत्र ' निरीक्ष्य विद्युन्नयनैः पयोदः ' इत्यादौ निरीक्षणादिकं रूपके साधकमस्ति तत्रैकदेशविवर्ति रूपकमेव ; न समासोक्तिरित्यादिविशेषा अपि तत्रैव द्रष्टव्याः । विशेषान्तरमाह—**अत्रेति** ॥ व्यवहारसमारोप एवेत्येवकारो रूपसमारोपव्यवच्छेदार्थः । तथा हि—यदा विशेषणसाम्यादप्रस्तुतं प्रस्तुतविशेष्यत्वेन प्रतीयते, न तु प्रयुज्यते, तदा निष्प्रतियोगिकत्वेनापरित्यक्तस्वरूपस्य प्रस्तुतस्य राजादेर्विशेषणसाम्यावगमितेनाप्रस्तुतसमुद्रत्वादिधर्मेण विशिष्टतया प्रतीतेः व्यवहारसमारोपः । यदा त्वप्रस्तुतमपि विशेष्यं प्रयुज्यते, तदा तत् प्रस्तुतमर्थं स्वेन रूपेण रूपवन्तं कृत्वा न्यग्भवति । प्रस्तुतमपि स्वरूपं परित्यज्याप्रस्तुततादूप्यमुपगृह्णाति । अतस्तत्र रूपसमारोप एव । तदुक्तम्—'अप्रस्तुतं प्रतीतं चेत् भेदकांशैकसाम्यतः । व्यवहारं समारोप्य प्रस्तुते न्यग्भवत्यथ ॥ तेनाप्रस्तुतवृत्तान्तारोपेण प्रस्तुतं स्वयम् । संक्षेपेणोच्यते यस्मात् समासोक्तिरियं तदा ॥ स्याद्विशेष्यांशसाम्यं चेत् प्रस्तुताकाररूपितम् । भवेदप्रस्तुतं वेद्यं रूपकालंकृतिस्तदा ॥' इति । अत्राप्रस्तुतस्य प्रतीयमानत्वात् व्यवहारसमारोप एवेति भावः । तं चतुर्धा विभजति—**स इति** ॥ वस्तुनि जात्यादौ । क्रमेणोदाहरति—

अत्रालंकारशास्त्रीये वस्तुनि तन्त्रशास्त्रप्रसिद्धवस्तुव्यवहारसमारोपः ।

तथा—

सालंकारा लसद्वर्णा सगुणा रसनिर्भरा ।
भावानुबन्धिनी भाति भारती काकतीश्वरे ॥ १२४ ॥

अत्रालंकारशास्त्रीये वस्तुनि भारत्याख्ये लौकिकनायिकाव्यवहारसमारोपः । समासोक्तौ विशेषणविशेष्ययोर्द्वयोरुपादानाभावाच्छ्लेषाद्विशेषः ।

## वक्रोक्त्यलंकारः ।

अन्येषामप्यलंकाराणामुक्तिसाम्येऽपि श्लेषगर्भत्वविशेषात् वक्रोक्तिरुच्यते—

**अन्यथोक्तस्य वाक्यस्य काका श्लेषेण वा भवेत् ।**
**अन्यथा योजनं यत्र सा वक्रोक्तिर्निगद्यते ॥ ११५ ॥**

---

**समाङ्गेति ॥** स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि सप्ताङ्गानि ; तद्गोचरया दानलक्ष्म्या त्यागवैभवेन विराजितः । अदेयमस्य किमपि नास्तीति भावः । अन्यत्र सप्ताङ्गानि करादीनि; तत्र स्फुरन्त्या स्रवन्त्या दानलक्ष्म्या मदवैभवेन विराजितः । तदुक्तम्—'करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति **पालकाप्ये** । करात् नासारन्ध्राभ्यामित्यर्थः । भद्रात्मा मङ्गलमूर्तिः । अन्यत्र भद्रजातिः । तल्लक्षणं(णो)मतङ्गज इति प्रतीयते । सर्वभूमेरीश्वरः सार्वभौमः । 'तस्येश्वरः' इत्यण्प्रत्ययः । अनुशतिकादित्वात् उभयपदवृद्धिः । तत्तां चक्रवर्तित्वम् । अन्यत्र सार्वभौमतां दिग्गजविशेषत्वं तनुते । अत्र प्रकृतप्रतापरुद्रेऽप्रकृतभद्रगजव्यवहारसमारोपः । लौकिके वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपमुदाहरति— **गुर्विति ॥** गुरुणा श्रेष्ठेन प्रमाणेन ध्वजादिशुभायविशिष्टप्रमाणेनेत्यर्थः । 'आयुधानां ध्वजाद्याया जयावहाः' इति तद्विदः । अन्यत्र प्रमाणेनानुमानेन, तस्यैव कथासाधनत्वात्, गौरवं चास्य व्याप्तिपक्षधर्मतावैशिष्ट्यनिबन्धनं द्रष्टव्यम् । प्रतिपक्षस्य शत्रोः प्रतिवादिनश्च । हेतिरायुधं हेतुरनुमानं चेति इकारोकारयोः श्लेषः । उद्यदिति शत्रा प्रयोगप्रारम्भ एवानयोः पराभव इति लभ्यते । समिति युद्धे सभायां च । खण्डनपण्डितत्वं विदारणकौशलम् । अन्यत्र दूषणनैपुण्यम् । अत्र विशेषणसाम्याद्वैतण्डिकः प्रतीयते । शास्त्रीयवस्तुव्यवहारसमारोपमुदाहरति—**अपूर्वेति ॥** अपूर्वस्याचुम्बितस्यार्थस्य श्लाघया कथनेन गुरूणां श्लाघ्यानां भणितीनां वाक्यानां यत् सारस्यमभिमुखीकरणयोग्यत्वं तस्य पदवी स्थानमित्यर्थः । पदे पदे प्रतिपदम् । श्रुतिग्राह्यं श्रोत्रेन्द्रियग्राह्यम् । किमप्यनिर्वचनीयम् । तत्त्वं माधुर्यरूपम् । कलयन्ती धारयन्ती । श्रुतिकटुत्वादिदोषराहित्येन श्लेषादिगुणसाहित्येन च स्रवत्सुधामधुरशब्दार्थशरीरेत्यर्थः । प्रबन्धश्रीः काव्यनाटकादिप्रबन्धलक्ष्मीः विजयते । यस्यां बुधश्रेणी विदग्धपरिषत् निपुणमधिकर्तुं रसमास्वादयितुं प्रभवति । अधिकारस्य फलस्वाम्यलक्षणत्वात् सहृदय एवात्राधिकारी

यत्र कयाचिद्विवक्षया प्रयुक्तस्य वाक्यस्य अन्यथा विवक्षया योजना क्रियते सा वक्रोक्तिः। उक्तिवक्रत्वे कथंचित् संभवत्यप्येवंविधलक्षणाभावात् सर्वालंकारेभ्यो भिद्यते। काक्वा यथा—

*बहुवल्लहो खु राआ सहि तस्स सिरिंमि णिब्भरासत्ती।
णूणा सिरिए वि तुमं अप्पाणं किं णु लहुवसि॥ १२६॥

अत्र त्वमपि श्रियो न्यूनगुणा न भवसि। अतस्त्वय्यपि नृपतिरासक्त एव, किमित्यात्मानं लघूकरोषीति काक्वा प्रतीयते। श्लेषेण यथा—

कस्ते सुन्दरि वर्तते हृदि सदा? राजा; किमिन्दुर्न हि
क्षोणीभृत्तिलकः; सुमेरुरयि किं? नो रुद्रदेवो विभुः।

---

* बहुवल्लभः खलु राजा सखि तस्य श्रियां निर्भरासक्तिः।
न्यूना श्रियोऽपि त्वमात्मानं किं नु लघयसि॥

---

नान्य इत्यर्थः। अपूर्वाणामर्थानां चोदनैकसमधिगम्यत्वेन प्रमाणान्तरागोचराणामग्निहोत्रादीनां श्लाघया कत्थनेन गुरूणां श्रेष्ठानां भणितानां विधिवाक्यानां यत् सारस्यमर्थवादप्रयुक्तं प्रवर्तनौन्मुख्यं तस्य पदवी स्थानं, विध्यादिविचारसध्रीचीनेत्यर्थः। श्रुतिशब्देन श्रुत्येकदेशो गृह्यते। तेन श्रुतिग्राह्यं लिङादिप्रत्ययवेद्यमत एव किमप्यलौकिकं तत्वं श्रेयःसाधनतारूपं धर्मम्। अत एवोक्तमाचार्यैः— 'श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥' इति। पद्यते गम्यते प्रामाण्यादिकमेभिरिति पदानि न्यायाः। प्रतिपदं सहस्रेणापि न्यायैरित्यर्थः। कलयन्ती इतिकर्तव्यतारूपेण प्रतिपादयन्तीत्यर्थः। मीमांसेति गम्यते। तदुक्तमाचार्यैः—'धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥' इति। यस्यां मीमांसायां बुधश्रेणिः निगमनिरुक्तादिविद्यानिष्णातविद्वत्सङ्घ एवाधिकर्तुं प्रभवति, तस्यैवात्राधिकारादिति भावः। तदुक्तं जिज्ञासाप्रस्तावे—'जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः। ज्ञातविद्यान्तरस्यान्या मीमांसा तत्पुरस्सरी॥' इति। अथवा मतान्तरेणार्थान्तरं तु—क्रियादिव्यतिरिक्तं स्थायिकार्यं प्रमाणान्तरागोचरमपूर्वम्। तदुक्तं शारि(लि)कानाथेन—'क्रियादिभिन्नं यत् कार्यं वेद्यं मानान्तरैर्न तत्। अतो मानान्तरापूर्वमपूर्वमिति गीयते॥' इति। तदेवार्थो वाक्यार्थः, प्रधानत्वात्। तदुक्तम्— 'कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वं च युज्यते' इति। एवमादेः श्लाघा कत्थनम्। तत्प्रधानानां गुरुभणितानां निबन्धनविवरणादिप्रभाकरग्रन्थानां यत् सारस्यं प्रसन्नगम्भीरत्वं तस्य पदवी स्थानं, तथाविधग्रन्थयुक्तेत्यर्थः। श्रुतिग्राह्यं लिङादिवाच्यम्। 'एवं कार्यात्मके ह्यर्थे व्युत्पद्यन्ते लिङादयः' इति शारि(लि)कोक्तेः। किमप्यलौकिकं तत्वम्। 'कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ। नियोग

ईशः किं सखि ! सत्यमात्थ सुभगे ! त्वं गोत्रसारोद्भवे-
त्याल्यां खल्वपहासवाचि विरहं किंचिद्वधूर्व्यस्मरत् ॥ १२७ ॥

## अथ स्वभावोक्तिः ।

**स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ॥ १२८ ॥**

यत्र चारुतया वस्तुनो यथावद्वर्णनं निबध्यते सा स्वभावोक्तिः ।

यथा—

मदश्च्युता नर्तितकर्णतालमुद्धूतमूर्ध्ना त्रिपदस्थितेन ।
लोलाग्रहस्तेन गजेन जातो नित्योत्सवः काकतिवीररुद्रः ॥ १२९ ॥

## व्याजोक्त्यलंकारः ।

अथोक्तिसाम्याद् व्याजोक्तिरुच्यते ।

**व्याजोक्तिः सा समुद्भूतं वस्तु यत्र निगूह्यते ॥ १३० ॥**

---

इति मीमांसानिष्णातैरभिधीयते ॥' इत्युक्तलक्षणनियोगापरपर्यायं धर्मं प्रतिपदं कलयन्तीत्यादि पूर्ववत् । लक्ष्ये लक्षणं योजयति—**अत्रालंकारेति** ॥ तन्त्रशास्त्रमत्र **भाट्टं प्राभाकरं** चेत्युभयं विवक्षितम् । शास्त्रीये वस्तुनि लौकिकव्यवहारसमारोपमुदाहरति—**सालंकारेति** ॥ अलंकारैरुपमादिभिः कटकादिभिश्च सहिता सालंकारा । लसद्वर्णा मधुराक्षरा मनोज्ञकान्तिश्च । सगुणा श्लेषादिगुणयुक्ता गाम्भीर्यादिगुणयुक्ता च । रसेन शृङ्गारादिनाऽनुरागेण च । निर्भरा पूर्णा । काकतीश्वरे विषये । भावोऽभिप्रायः प्रेमा च, तस्यानुबन्धो विच्छेदाभावः, तद्वती । भारती वाणी । नायिका तु गम्यते । ननु यत्र श्लिष्टविशेषणसाम्यं तत्र श्लेष एवालंकारः कस्मान्न भवतीत्यत्राह—**समासोक्ताविति** ॥ अप्रकृतविशेष्यस्यापि पृथगुपादाने श्लेषः । तदभावादत्र न श्लेषत्वमिति भावः । वक्रोक्तेः संगतिपूर्वकं लक्षणमाह—**उक्तिसाम्य इत्यादिना** ॥ **अन्यथोक्तस्येति** ॥ केनचिदिति शेषः । **अन्यथा योजनमिति** ॥ अपरेणेति शेषः । तदेतद् व्याचष्टे—**यत्रेति** ॥ सर्वेभ्यो भेदमाह—**उक्तीति** ॥ वक्रत्वे वैचित्र्याम् । **संभवत्यपीति** ॥ सर्वालंकारेष्विति शेषः । विच्छित्तिमात्रवाचिनो वक्रशब्दस्योक्तविशेषे पर्यवसानात् सर्वविलक्षणत्वमिति भावः । काकुमूलां वक्रोक्तिमुदाहरति—**बह्विति** ॥ अप्पाणमित्यत्र 'आत्मनि पः' इति सूत्रेणात्मशब्दे युक्तवर्णस्य पकारादेशः । अत्र प्रथमार्धे नायिकया संभावितस्यात्मन्यूनत्वस्य द्वितीयार्धे सख्या श्रियो न्यूनेत्यत्र काका निषेधयोजनात् वक्रोक्तिः । श्लेषमूलामुदाहरति—**क इति** ॥ अत्र सखीनायिकयोरुक्तिप्रत्युक्तितया नव वाक्यानि योजनीयानि । राजा नृपश्चन्द्रश्च । क्षोणीभृत्तिलको राजश्रेष्ठः पर्वतोत्तमश्च । रुद्रदेवः प्रतापरुद्रो रुद्रश्च । सत्यमात्थ ब्रूषे । गोत्रसारोद्भवा सत्कुलप्रसूता पर्वतराजपुत्री च । अपहासप्रधाना वाचो

यत्र प्रकाशं वस्तु साम्यगर्भत्वेन निगूहनार्हत्वात् केनचित् व्याजेन प्रच्छाद्यते सा व्याजोक्तिः । यथा—

क्षोणीपाणिग्रहणसमये संमदाद्रोमहर्षे
सर्वाङ्गीणे नृपतितिलकः काकतीयान्वयेन्दुः ।
धीरोदात्तः शिशिरसलिलैः किं नु राज्याभिषेकः
कर्तव्यः स्यादिति मृदु हसन् वीक्षते मन्त्रिवृद्धान् ॥ १३१ ॥

अत्र क्षोणीपाणिग्रहणजनितं रोमहर्षणं धीरोदात्ततया प्रतापरुद्रदेवेन महाभिषेकसलिलशैत्यव्याजेन प्रच्छादयता मन्त्रिणो वीक्ष्यन्ते ।

## मीलनालंकारः ।

व्याजोक्त्युत्तरं किंचित्साम्यान्मीलनमुच्यते ।

**मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम् ॥ १३२ ॥**

यत्र वस्तुना वस्त्वन्तरं प्रच्छादितं भवति स मीलनालंकारः । स द्विविधः—सहजेनागन्तुकतिरोधानम्, आगन्तुकेन सहजतिरोधानं चेति । यथाक्रममुदाहरणे—

उग्रैः काकतिवीररुद्रनृपतेर्दोर्दण्डविस्फूर्जितै-
र्युद्धप्राङ्गणवर्जितेषु पतिषु क्वापि प्रलीनात्मसु ।
विष्वक्तीव्रतरस्मरज्वरजुषामङ्गे द्विषद्योषितां
संक्रान्तोऽपि न लक्ष्यते पथि महानूष्मा चिरं मारवः ॥ १३३ ॥

---

यस्यास्तस्यामपहासवाचि । विरहं वियोगदुःखं किंचित् व्यस्मरत् । वक्रोक्तिविपर्ययेण स्वभावोक्तिं लक्षयति—**स्वभावेति** ॥ यत्र चारु सम्यगग्राम्यम् यथावदन्यूनातिरेकेण वस्तुनो वर्णक्रियासंस्थानरूपस्य वस्तुस्वभावस्य कविप्रतिभैकगोचरस्य वर्णनमसौ स्वभावोक्तिः । अत एवेदं ग्राम्यं नालंकार इत्युक्तं दोषप्रकरणे । उदाहरति—**मदेति** ॥ मदश्च्युता मदस्राविणा । नर्तितकर्णतालं यथा भवति तथा उद्धूतमूर्ध्नां कम्पितकुम्भस्थलेन । त्रिभिः पदैः स्थितं स्थितिर्यस्य तेन त्रिपदस्थितेन । अग्रं चासौ हस्तश्चेत्यवयवावयविनोरभेदविवक्षायां विशेषणसमासः । यदाह **वामनः**—'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्' इति । अत्र क्रियास्वभाववर्णनम् । एवं वर्णसंस्थानयोरुदाहार्यम् । व्याजोक्तेः संगतिमाह—**उक्तीति** ॥ लक्षणमाह—**व्याजोक्तिरिति** ॥ व्याचष्टे—**यत्रेति** ॥ प्रकाशं निगूढचरं कुतश्चिन्निमित्तात् प्रकटमित्यर्थः । अत्र वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद् व्याजोक्तिरित्यर्थः । उदाहरति—**क्षोणीति** ॥

अत्र सहजेन रिपुकामिनीगतेन स्मरानलोष्मणा मार्गवशादागन्तुको मरूष्मा तिरोधीयते । तथा—

प्रतापरुद्रस्य भुजप्रभावादन्तर्भयाद् भूमिभुजामजस्रम् ।

स्वेदाश्रुकम्पाद्युदयेऽप्यनङ्गगोष्ठ्यां स्त्रियः प्रेम्णि न विश्वसन्ति ॥ १३४ ॥

अत्र भयजनितेन कम्पादिनाऽऽगन्तुकेन सहजस्य प्रेमजनितस्य कम्पादेस्तिरोधानम् ।

## सामान्यालंकारः ।

**सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता ॥ १३५ ॥**

यत्र एकस्य वस्तुनो गुणसाम्येन वस्त्वन्तरैकात्म्यं भवति, स सामान्यालंकारः । यथा—

कैलासदुग्धार्णवयानहंसेष्वलक्षितेष्वन्ध्रनरेन्द्रकीर्तौ ।

त्रयः पुमांसः प्रथमे स्मयन्ते स्वसेवकान् संभ्रमतो विलोक्य ॥ १३६ ॥

अत्रः प्रतापरुद्रकीर्त्यां जगत्सु विजृम्भितायां कैलासप्रभृतीनां विमलवस्तूनां तदैकात्म्यम् ।

## तद्गुणालंकारः ।

इतरगुणसंनिधानातिशयसाम्यात् तद्गुण उच्यते ।

**तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः ॥ १३७ ॥**

यत्र न्यूनं स्वगुणं विहाय संनिहितवस्तुनः सकाशादुत्कृष्टगुणः स्वीक्रियते स तद्गुणालंकारः । यथा—

---

सर्वाण्यङ्गानि व्याप्नोतीति सर्वाङ्गीणः । 'तत्सर्वादेः' इति खप्रत्ययः । अत्र निगूढः क्षोणीपाणिग्रहणजन्यो हर्षो रोमहर्षेण प्रकाशितः सलिलशैत्यव्याजेनाच्छाद्यत इत्याह—**अत्रेति** ॥ धीरोदात्ततया गाम्भीर्येणाच्छादितस्यापि हर्षस्य मृदुहासेन पुनः प्रकाशनं लक्षणान्तःपातीति रहस्यम् । मीलनं संगमयति—**व्याजोक्तीति** ॥ लक्षयति—**मीलनमिति** ॥ उत्कृष्टवस्तुनाऽपकृष्टवस्तुनिगूहनं मीलनमित्यर्थः । अत एव गुणसामान्यनिबन्धनात् सामान्यादस्य भेद इति द्रष्टव्यम् । सहजेनागन्तुकतिरोधानमुदाहरति **उग्रैरिति** ॥ दोर्दण्डविस्फूर्जितैः भुजविजृम्भितैः । युद्धप्राङ्गणवर्जितेषु वर्जितयुद्धप्राङ्गणे-

प्रतापरुद्रदेवाङ्घ्रिनखज्योत्स्नाविजृम्भितैः ।
नमन्नृपतिमाणिक्यमौलयः शुचयः कृताः ॥ १३८ ॥

अत्र प्रणमतां भूपतीनां पद्मरागमुकुटाः स्वां शोणप्रभां मुक्त्वा काकतिवीररुद्रपदनखज्योत्स्नागतं धवलिमानमुद्वहन्ति स्म ।

## अतद्गुणालंकारः ।

तत्प्रातिपक्ष्यादतद्गुणो निरूप्यते ।

**सति हेतावन्यगुणास्वीकारः स्यादतद्गुणः ॥ १३९ ॥**

यत्र संनिधानरूपे हेतौ सत्यप्यन्यगुणस्वीकारो नास्ति असावतद्गुणालंकारः । यथा —

ईशानं समया जगत्यटति तल्लीलाट्टहासोज्ज्वले
दैत्यारिं परितस्तदङ्गविलसन्नीलद्युतिद्योतिते ।
ब्रह्माणं निकषा च तत्तनुमिलत्स्वर्णप्रभाभास्वरे
पुष्णन् रुद्रनरेन्द्रकीर्त्तिविभवः स्वामेव शुभ्रां छविम् ॥ १४० ॥

अत्र हरिहरविरिञ्चीनां समीपवर्तिषु जगत्सु तत्तन्नानाप्रभासमग्रेष्वपि निरन्तरं विहरमाणस्य प्रतापरुद्रयशसो निरङ्कुशः स्वकीय एव धवलिम विजृम्भते ।

---

ष्वित्यर्थः । 'वाऽऽहिताग्न्यादिषु' इति परनिपातः । लक्षणं योजयति—**अत्रेति** ॥ आगन्तुना सहजतिरोधानमुदाहरति—**प्रतापेति** ॥ भुजप्रभावात् पराक्रमाद् भयहेतोः । अन्तर्गतं भयमन्तर्भयमाकारगोपनेनाभिव्यक्तमित्यर्थः, तस्माद्धेतोः । भूमिभुजां संबन्धिनि प्रेम्णि विषयेन विश्वसन्ति । प्रेममूलानामपि स्वेदादीनां भयानुभावत्वशङ्कयेति भावः । मीलनसाधर्म्यात् तदनन्तरं सामान्यं लक्षयति—**सामान्यमिति** ॥ यत्र गुणसाम्यात् प्रस्तुतस्य वस्तुनोऽप्रस्तुतवस्त्वन्तरैकात्म्यं निबध्यते तत्र समानगुणसाम्यात् सामान्यमित्यर्थः । **कैलासेति** ॥ प्रथमे पुमांसः शिवकेशवविरिञ्चाः । संभ्रमतः संभ्राम्यतः क्वचिदप्यनवतिष्ठमानान् । स्मयन्ते मन्दं हसन्ति । लक्षणं योजयति—**अत्रेति** ॥ तद्गुणं संगमयन् लक्षयति—**तद्गुण इति** ॥ मीलने वस्त्वन्तरनिगूहनम् ; इह पुनरनिगूहितस्यान्यगुणेनोपराग इत्यनयोर्भेद इति **सर्वस्वकार**हृदयम् । तस्याप्रकृतस्य गुणोऽत्रास्तीति तद्गुणः । उदाहरणं स्पष्टम् । अतद्गुणमाह—**तत्प्रातिपक्ष्यादित्यादिना** ॥ **ईशानमिति** ॥ अत्रेशानादिसमी-

## विरोधालंकारः ।

अतद्गुणे किंचित्प्रक्रान्तत्वाद् विरोधस्य विरोधालंकारो निरूप्यते ।

**आभासत्वे विरोधस्य विरोधालंकृतिर्मता ॥ १४१ ॥**

यत्र प्रथममाभासतया प्रतीतो विरोधः पर्यवसाने परिह्रियते स विरोधालंकारः । तत्र जातेर्जात्यादिना सह विरोधे चत्वारो भेदाः । क्रियायाः क्रियागुणद्रव्यैः सह विरोधे त्रयो भेदाः । गुणस्य गुणद्रव्याभ्यां विरोधे द्वौ भेदौ । द्रव्यस्य द्रव्येण सह विरोधे एको भेदः । एवं दश विरोधे भेदाः । जातेर्जात्या क्रियया च विरोधो यथा—

पद्माकरोऽपि विलसति नितरामजडाशयोऽयमुर्वीशः ।
विमलतरवारिधाराऽप्यासीद्वैरिक्षितीशतापकरी ॥ १४२ ॥

अत्र पूर्वार्धे जात्योर्विरोधः, कमलाकरोऽप्यजडाशय इति विरोधात् । उत्तरार्धे जातिक्रिययोर्विरोधः, विमलतरवारिधारायाः संतापकरणविरोधात् । अत्र श्लेषमूलो विरोधः ।

जातेर्गुणद्रव्याभ्यां विरोधो यथा—

अमदः सार्वभौमोऽपि भास्वानपि कलानिधिः ।
वीररुद्रनरेन्द्रोऽयमद्भुतानां विहारभूः ॥ १४३ ॥

अत्र सार्वभौमोऽप्यमद इति जातिगुणयोर्विरोधः । भास्वानपि कलानिधिरिति जातिद्रव्ययोर्विरोधः । कलानिधेरेकत्वात् द्रव्यत्वम् । अत्रापि श्लेषमूलता । क्रियायाः क्रियया विरोधो यथा—

---

पवर्तिनि तत्तद्वर्णविशिष्टे जगति कीर्त्तिविभवः स्ववर्णमजहदेवाटतीत्यर्थः । अत एवातद्गुण इत्याह—**अत्रेति** ॥ ईशानमित्यादौ 'अभितः परितः—' इत्यादिना द्वितीया । विरोधं संगमयति—**अतद्गुण इति** ॥ विरोधस्य सत्यपि संनिधानेऽन्यगुणस्वीकाराभावलक्षणस्येत्यर्थः । लक्षयति—**आभासत्व इति** ॥ व्याचष्टे—**यत्रेति** ॥ अत्र विशेषतो विभागमाह—**तत्र जातेरिति** ॥ **क्रियायास्त्रयो भेदा इति** ॥ जात्या सहैतस्या विरोधस्य जातेरेतया विरोधेन गतार्थत्वादिति भावः । एवं यथोत्तरमेकैकन्यूनता द्रष्टव्या । अत्रायं संग्रहः—' क्रमाज्जातिगुणद्रव्यक्रियाणां तत्तदादिभिः । विरोधे दश भेदाः स्युश्चतुस्त्रिद्व्येकभेदतः ॥'

धर्मद्विषामर्थमुषां च भङ्गमुत्पादयन् काकतिवीररुद्रः ।
त्रिवर्गसाधारणगोचरोऽपि करोति कामद्विषि भावमार्द्रम् ॥ १४४ ॥

अत्र त्रिवर्गसाधारणवृत्तेर्धर्मार्थविरोधिषु भङ्गकरणं कामारौ स्नेहकरणं च विरुद्धम् । क्रियाया गुणद्रव्याभ्यां विरोधो यथा—

एष जिष्णुविहारोऽपि गोत्रवात्सल्यलालसः ।
करोति कमलोल्लासं राजाऽप्यन्ध्रनरेश्वरः ॥ १४५ ॥

अत्र जिष्णुविहारस्य गोत्रवात्सल्यमिति क्रियागुणयोर्विरोधः । कमलोल्लासं कुर्वन्नपि राजेति क्रियाद्रव्ययोर्विरोधः । अत्रापि श्लेषमूलतैव । गुणस्य गुणेन विरोधो यथा—

*रज्जंतो भुवणमिअं राएत्ति जए सलाहणिज्जो सि ।
रुद्दणरिंद ! कहं सा रत्ता वि अ पंडुरा जाआ ॥ १४६ ॥

---

* रञ्जयन् भुवनमिदं राजेति यथा श्लाघनीयोऽसि ।
रुद्रनरेन्द्र ! कथं सा रक्ताऽपि च पाण्डुरा जाता ॥

---

इति । **पद्माकर इति** ॥ पद्माकरः सरोऽप्यजडाशय इति लडयोरभेदाज्जडाशयो जलस्थानं न भवतीति विरोधस्य लक्ष्मीनिवासोऽयममन्दबुद्धिरिति परिहारः । विमलतरा अतिनिर्मला वारिधाराऽपि तापकरीति जातिक्रिययोर्विरोधस्य तरवारिरायुधविशेषस्तस्य धारा कोटिरिति परिहारः । सर्वत्रापिशब्दो विरोधद्योतकः । नायमौद्भटानामिव विरोधबाधकः श्लेषः; किं तु श्लेषविरोधयोरङ्गाङ्गिभावेन संकर इत्याशयेनाह—**अत्र श्लेषमूलो विरोध इति** ॥ उत्तरत्राप्येवंविधोदाहरणेष्वेवमेव विरोध इति द्रष्टव्यम् । **अमद इति** ॥ सार्वभौमो दिग्गजोऽप्यमदो मदरहित इति जातिगुणयोर्विरोधः; सर्वभूमीश्वरोऽपि निरहंकार इति परिह्रियते । भास्वान् सूर्योऽपि कलानिधिश्चन्द्र इति जातिद्रव्ययोर्विरोधः; तेजस्वी चतुःषष्टिकलाकुशल इति परिह्रियते । **धर्मद्विषामिति** ॥ त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । त्रिवर्गः साधारणो वैषम्यरहितः गोचरः सेव्यत्वेन विषयो यस्य स तथोक्तः । 'न बाधतेऽस्य त्रिगुणः परस्परम्' इति भावः । कामद्विषि कामपुरुषार्थद्वेषिणि स्मरहरे च । अत एव क्रिययोर्विरोधः समाधीयत इत्याह—**अत्र त्रिवर्गेति** ॥ पूर्वत्र द्वयोः विरोधिनोः श्लिष्टत्वम्; अत्र पुनरेकस्यैवेति विशेषः । **एष इति** ॥ जिष्णोरिन्द्रस्य विहार इव विहारो व्यापारो

अत्र रक्तत्वपाण्डुरत्वयोर्विरोधः। गुणस्य द्रव्येण विरोधो यथा—

ज्वलत्प्रतापरौद्रोऽपि काकतीयनरेश्वरः।
भूत्वा जैवातृको भाति शश्वद्विश्वप्रियंकरः॥ १४७॥

अत्र प्रतापरौद्रोऽपि जैवातृक इति गुणद्रव्ययोर्विरोधः।

द्रव्यस्य द्रव्येण विरोधो यथा—

विभाति काकतीन्द्रोऽयं रुद्रोऽपि चतुराननः।
तथा च जिष्णुरित्येष कथ्यते पुरुषोत्तमः॥ १४८॥

एवं दश भेदा दर्शिताः। अयमश्लेषेणापि भवति। यथा—

स्वभावशिशिरा दृष्टिरपि काकतिभूभुजः।
सर्वाङ्गतापिनी जाता प्रतिपक्षमहीभृताम्॥ १४९॥

अत्र स्वभावशिशिरापि तापिनीति विरोधः।

## विशेषालंकारः।

अथ विरोधगर्भालंकारा निरूप्यन्ते।

**आधाररहिताधेयमेकं चानेकगोचरम्।**
**अशक्यवस्तुकरणं विशेषालंकृतिस्त्रिधा॥ १५०॥**

---

यस्य स तथोक्तः। तथापि गोत्रवात्सल्यलालसः पर्वतानुरक्त इति क्रियागुणौ विरुद्धौ जयशीलव्यापारः कुलानुकूलश्चेति समाहितौ। राजा चन्द्रोऽपि कमलोल्लासं करोतीति विरोधस्य क्रियाद्रव्यगतस्य नृपतिर्लक्ष्मीविलासमिति परिहारः। **रज्जन्त इति**। 'न्तमाणौ शतृशानचोः' इति शतरि न्तादेशः। 'सलाहणिज्जो सि' इत्यत्र 'अः क्षमाश्लाघयोः' इति श्लाघाशब्दे युक्तवर्णस्य विप्रकर्षः, पूर्वस्याकारयुक्तता चेति वेदितव्यम्। **ज्वलदिति**॥ प्रतापरौद्रोऽपि जैवातृकश्चन्द्र इति गुणद्रव्ययोर्विरोधः। जैवातृक आयुष्मानिति परिहारः। **विभातीति**॥ रुद्रोऽपि चतुराननो ब्रह्मेति जिष्णुरिन्द्रोऽपि पुरुषोत्तमो विष्णुरिति च द्रव्ययोर्विरोधः रुद्र इति नामादिभिः प्रसिद्धैरर्थान्तरैः परिह्रियते। **स्वभावेति**॥ शैत्यसंतापयोर्गुणयोरश्लिष्टयोर्विरोधो विषयभेदेन परिह्रियते। विरोधमूलेष्वनेकभेदं विशेषमाह— **आधारेति**॥ प्रसिद्धाधाररहितमाधेयम्, एकं परिमितं वस्तु युगपदेवानेकगोचरम्, तथा किंचिद् वस्त्वारभमाणस्तेनैव यत्नेनाशक्यवस्त्वन्तरमारभत इति त्रयो विशेषभेदा

यत्राधारमन्तरेणाधेयो निबध्यते स एको विशेषः । एकस्यानेकगोचरत्वे द्वितीयो विशेषः । प्रकृतादशक्यवस्त्वन्तरकरणे तृतीयः । यथाक्रममुदाहरणानि—

नलनहुषदिलीपधर्मपुत्रप्रभृतिनरेश्वरसंश्रिता यशःश्रीः ।
अनुदिनमधुनाऽभ्युपेत्य मैत्रीं विलसति काकतिवीररुद्रकीर्त्या ॥ १५१ ॥

अत्र प्राचां भूपतीनामाधारभूतानां तिरोधानेऽप्याश्रितायाः कीर्तेरवस्थानम् । यथा च—

पश्यन्तो भयविह्वलाः प्रतिनृपाः पश्चात् पुरः पार्श्वयो-
रप्यन्तर्बहिरन्ध्रपार्थिवपतिं प्रोत्क्षिप्तकौक्षेयकम् ।
निःसीमोल्बणधावनव्यतिकरप्रभ्रष्टदोरायुधाः
शैलाच्छैलमटन्ति कम्पविलसद्गाम्भीर्यशौर्यश्रियः ॥ १५२ ॥

अत्र भयभ्रान्तानां शत्रुनृपतीनां प्रतापरुद्रनृपतिरेकोऽप्यनेकत्र प्रतीयते । तथा च—

अपारकरुणानिधेः सदसि वीररुद्रप्रभोः
प्रसादमधुरक्रमा लगति यत्र दृष्टिर्जने ।
अतीन्द्रमतिकिंनराधिपमशेषलोकोन्नतं
न किं किमधितिष्ठति त्रिभुवने स सर्वाधिकः ॥ १५३ ॥

अत्र साधारणो जनः प्रतापरुद्रदृष्टिप्रसादपात्रीकृतः किं किं न लभत इत्यशक्यवस्त्वन्तरकरणम् ।

---

इत्यर्थः । क्रमेणोदाहरति—**नलेति** ॥ अधुनाऽपि—नलादीनामभावसमयेऽपीत्यर्थः । नलादिसदृशकीर्त्तिरयं राजेति भावः । योजयति—**अत्रेति** । **पश्यन्त इति** ॥ धावनव्यतिकरः पलायनसंबन्धः । **कम्पेति** ॥ कम्पेन विगलन्त्यौ मूर्तद्रव्यवत् पतन्त्यौ गाम्भीर्यशौर्यश्रियौ येषां ते तथोक्ता इत्यतिशयोक्तिः । योजयति—**अत्रेति** । **अपारेति** ॥ सदस्यास्थाने यत्र जने साधारणे प्रसादमधुरक्रमा प्रसन्नेत्यर्थः ; दृष्टिर्लगति स जनः सर्वाधिको लोकोत्तरः सन्नलौकिकं वैभवमनुभवतीत्यर्थः । अत्र पृथग्जनेऽपि प्रसादमारभमाणा दृष्टिरैश्वर्यविशिष्टतामारभते किल, किमुत विशिष्टे जन इत्यर्थापत्तिर्व्यज्यते : संगतिपूर्वकमधिकं लक्षयति—

## अधिकालंकारः ।

आधाराधेयवैचित्र्यादधिकालंकारो निरूप्यते ।

**आधाराधेययोरानुरूप्याभावोऽधिको मतः ॥ १५४ ॥**

यत्राश्रयाश्रयिणोरानुरूप्यं नास्ति सोऽधिकालंकारः । स द्विविधः, आश्रयस्याल्पत्वमहत्त्वाभ्याम् ।

स्तोके ब्रह्माण्डरन्ध्रे विपुलतरतया स्वैरसंचारहेला-
संकोचादेकराशीभवदतनुरुचौ काकतीन्द्रस्य कीर्तौ ।
एतैः प्रालेयपृथ्वीधररजतगिरिस्वर्णदीशीतभानु-
क्षीराम्भोराशिमुख्यैः प्रकटितमधुना तद्घनीभावरूपम् ॥ १५५ ॥

अत्राश्रयस्य रोदःकुहरस्याल्पत्वमाश्रितस्य प्रतापरुद्रयशसो वैपुल्यम् ।

द्वितीयो यथा—

क्वापि क्वापि कलिङ्गमालवमहाराष्ट्राङ्गवङ्गादयो
भूपास्तादृशसैन्यवैभवसमाक्रान्ताखिलाशान्तराः ।
लीनाः काकतिवीररुद्रनृपतेर्व्यूहप्रपञ्चश्रिया
निःसीमे बलवारिधौ विदधते पूर्तिं न कोणेऽप्यहो ॥ १५६ ॥

अत्राश्रयस्य प्रतापरुद्रसैन्याम्बुधेर्वैपुल्यम् । आश्रितानामङ्गवङ्गकलिङ्ग-प्रभृतिराजकानीकिनीनामल्पत्वम् ।

---

**आधारेत्यादिना ॥** तस्य द्वेधा विभागमाह—**स इति ॥** आद्यमुदाहरति **स्तोक इति ॥** स्वैरसंचारस्य स्वेच्छाविहारस्य हेलाया विस्रम्भस्य संकोचात् । प्रालेयपृथ्वीधरादिभिस्तद्घनीभावरूपं प्रकटितम् । अत्राधारे ब्रह्माण्डेऽल्पतमे आधेयायाः कीर्तेराधिक्येन संचारसंकोचात् तत्र तत्र पिण्डीभूताः कीर्तिखण्डा एवामी ; न तु हिमाचलप्रभृतय इत्यनयोरानुरूप्याभावः । द्वितीयमुदाहरति—**क्वापीति ॥** व्यूहानां मकरादिसंज्ञितानां सेनासंनिवेशविशेषाणां प्रपञ्चस्य श्रिया समृद्ध्या निःसीमे उद्वेले बलवारिधौ कलिङ्गमालवादिसेनाः सेवार्थमागताः सरित इव समुद्रे यत्र कुत्रापि कोणे विलीयन्त इत्यर्थः । अत्राधारस्याधिक्यमाधेयस्याल्पत्वं च न प्रमाणविरुद्धम् । किं तु महौदनमध्ये भिक्षाकबल इव नानुरूपम् । अत एवोक्तम्—'आधाराधेययोरानुरूप्याभावः' इति । अनानुरूप्यसारूप्यादधिकानन्तरं विभावनां तद्विपर्ययरूपां विशेषोक्तिं चोदाहरणलाघवार्थं युगपल्लक्षयति—**कारणेनेत्यादिना ॥**

## अथ विभावना विशेषोक्तिश्च ।

**कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना ।**
**तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते ॥ १५७ ॥**

यत्र प्रसिद्धकारणपरित्यागेन कार्यस्योत्पत्तिर्निगद्यते सा विभावना । यत्र साकल्ये सत्यपि कार्यस्यानुत्पत्तिः सा विशेषोक्तिः ।

यथा—

प्रतापरुद्रेण पराजितानां प्रत्यर्थिनां विन्ध्यगुहागतानाम् ।
तमांस्यरात्रीणि समुद्भवन्ति तेजांसि घस्रेष्वपि नोद्भवन्ति ॥ १५८ ॥

अत्र तमःप्रादुर्भावस्य प्रसिद्धकारणं रात्रिः । तया विनापि तस्योत्पत्तिर्निबद्धा । अप्रसिद्धं कारणं शोकाद्यस्त्येव । तथा अहस्सु रविकिरणेषु सत्स्वपि तेजसोऽनुत्पत्तिरिति अत्र निष्प्रतापत्वादि निमित्तमस्त्येव ।

## असंगत्यलंकारः ।

कार्यकारणविरोधप्रस्तावाद् असंगतिरुच्यते ।

**कार्यकारणयोर्भिन्नदेशत्वे सत्यसंगतिः ॥ १५९ ॥**

यत्रैकदेशवर्तिनोरपि कार्यकारणयोर्भिन्नदेशस्थितिर्निबध्यतेऽसावसंगत्यलंकारः । यथा—

---

यदि कारणमात्रेण विना कार्योत्पत्तिरुच्यते तदा विरोधो दुष्परिहरः स्यात् कारणान्वयव्यतिरेकानुविधायित्वात् कार्यस्येत्यतस्तत्परिहारार्थमाह—**प्रसिद्धेति** ॥ अत एव वैशिष्ट्येन कार्यस्य भावनाद् विभावना । **साकल्य इति** ॥ कारणानामिति शेषः । अत्रापि विरोधपरिहारार्थं सामग्रीवैगुण्यमुन्नेयम् । विभावनायां कार्योत्पत्तौ विरोधः, विशेषोक्तौ कारणसत्तायामित्युभयविरोधानुप्राणिताद्विरोधादेकैकविरोधानुप्राणितयोरनयोर्भेदः । उदाहरति—**प्रतापेति** ॥ अविद्यमाना रात्रिः प्रसिद्धकारणं येषां तान्यरात्रीणि । तमांस्यन्धकारा मोहाश्च । घस्रेषु दिनेष्वपि । तेजांसि प्रकाशाः विवेकाश्च । योजयति—**अत्रेति** ॥ अत्र तमसां द्वैविध्येऽप्यभेदाध्यवसायादेकत्वमतिशयोक्त्या । सा चास्यामव्यभिचारिणीति न तद्बाधेनास्या उत्थानम्; अपि तु तदनुप्राणितत्वेनेत्यादिविशेषा अवान्तरभेदाश्च **सर्वस्वे** द्रष्टव्याः । असंगतेः संगतिपूर्वकं

बिभ्रत्युर्वीधुरां गुर्वीं वीररुद्रनरेश्वरे ।
भवन्त्यतितरां शश्वन्नम्राः सामन्तमौलयः ॥ १६० ॥

अत्र राज्ञि भूभारः शत्रुषु नमनमिति ।

## विचित्रालंकारः ।

विरोधप्रस्तावाद्विचित्रं निरूप्यते ।

**विचित्रं स्वविरुद्धस्य फलप्राप्त्यर्थमुद्यमः ॥ १६१ ॥**

यत्र स्वविरुद्धफलप्राप्त्यर्थमुद्योगः क्रियते स विचित्रालंकारः ।

यथा—

प्रतापरुद्रनृपतेरग्रे दूरान्नरेश्वराः ।
अवरोहन्ति हस्तिभ्यस्तानारोढुमनर्गलम् ॥ १६२ ॥

अत्रारोढुमवरोहन्तीति विपरीतफलप्राप्त्यर्थं प्रयत्नः ।

## अन्योन्यालंकारः ।

अथान्योन्यं निरूप्यते । अस्यापि विरोधमूलता ।

**तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत् ॥ १६३ ॥**

यत्र परस्परं क्रियाद्वारकमुत्पाद्योत्पादकत्वं तदन्योन्यालंकारः ।

यथा—

आरोहता रुद्रनरेश्वरेण विराजते काकतिराजपीठम् ।
आरुह्य तेनोज्ज्वलरत्नभाजा राजापि लक्ष्मीमधिकां बिभर्ति ॥ १६४ ॥

अत्र प्रतापरुद्रभद्रासनयोरन्योन्यालंकार्यत्वम् ।

---

लक्षणमाह—**कार्येत्यादिना** ॥ धूमाग्न्योरिव कार्यकारणयोः समानदेशत्वं न्यायसिद्धं, तदन्यथाकृतं चेदुचितसंगतिनिवृत्तेरसंगतिर्नामालंकारः । उदाहरति—**बिभ्रतीति** ॥ स्पष्टम् । विचित्रं संगमयन् लक्षयति—**विरोधेत्यादि** ॥ स्वस्य हेतोर्विरुद्धस्य विपरीतस्य फलस्याप्त्यर्थमुद्यम उत्साहो विचित्रालंकारः । न चायं विषमाद्यभेदेऽन्तर्भवति । ' इह हि निषेधो वैपरीत्यं गमयति । विषमे तु व्यत्ययः' इति भेदस्य **रुचकेनोक्त**त्वात् । उदाहरति—**प्रतापेति** ॥ योजयति—**अत्रेति** ॥ अन्योन्यं निरूपयति—

## विषमालंकारः ।

अथ विरोधमूलो विषमालंकारः कथ्यते ।

**विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् ।**
**विरूपघटना चासौ विषमालंकृतिस्त्रिधा ॥ १६५ ॥**

यत्र कारणाद्विरुद्धकार्यस्योत्पत्तिस्तदेकं विषमम् । अकार्यभूतस्यानर्थस्योत्पत्तिर्द्वितीयम् । विरूपयोर्वस्तुनोः संघटने तृतीयम् । तत्र प्रथमं यथा—

राज्ञः काकतिवीररुद्रनृपतेः खड्गात् तमालप्रभा-
दुद्भूतां शरदिन्दुकान्तिधवलां कीर्त्तिश्रियं पश्यताम् ।
लोकानां मुरवैरिपादकमलाज्जातां वियन्निम्नगां
श्रुत्वा संप्रति विस्मयाद्विरमति प्राप्तानुभावं मनः ॥ १६६ ॥

अत्र नीलवर्णात् खड्गादिन्दुधवलस्य यशसः समुत्पत्तिः ।

द्वितीयं यथा—

आस्तां जयाशा रिपुभूपतीनां संग्रामसीमाममुपागतानाम् ।
प्रतापरुद्रस्य विलोकनेन भ्रश्यन्ति जीवैः सममायुधानि ॥ १६७ ॥

अत्र समरोद्योगफलस्य न केवलं जयस्यानुत्पत्तिर्यावज्जीवितभ्रंशरूपानर्थोत्पत्तिरपि । तृतीयं यथा—

क्व भूपालास्तादृग्विभवमहनीयप्रकृतयः
क्व चेयं कान्तारस्थितिरशिववृत्त्येकनिलया ।
इति प्रेक्षंप्रेक्षं वनभुवि रिपून् रुद्रनृपतेः
प्रतापं श्लाघन्ते शबरपुरवीराः प्रतिदिशम् ॥ १६८ ॥

---

**अथेत्यादिना । विरोधमूलतेति** संगतिकथनम् । **क्रियाद्वारक**मिति । साक्षात् परस्परजन्यजनकभावस्य विरुद्धत्वादिति भावः । **आरोहतेति** ॥ अत्रालंकारद्वारा रुद्रभद्रासनयोर्जन्यजनकभाव इत्याह—**अत्रेति** ॥ संगतिपूर्वकं विषमं लक्षयति—**विरुद्धेति** ॥ कारणविरुद्धकार्यस्येत्यर्थः । **अनर्थस्य वेति** ॥ उत्पत्तिरिति शेषः । आद्यमुदाहरति—**राज्ञ इति** ॥ अनुगतो भावो दार्ष्टान्तिकधर्मो यस्यासावनुभावो दृष्टान्तः । प्राप्तानुभावमनुभूतदृष्टान्तं लोकानां मनो विस्मयात् विरमति । अद्वितीयमेव

अत्र महानगरनिवासयोग्यानां राज्ञामशिवानां वनप्रदेशानां विरूपाणां संघटनम् ।

एवं विरोधगर्भालङ्कारा निर्णीताः ।

## समालंकारः ।

अधुना विषमवैधर्म्यात् समालंकारो निरूप्यते ।

**सा समालंकृतिर्योगे वस्तुनोरनुरूपयोः ॥ १६९ ॥**

यत्रान्योन्यानुरूपपदार्थसंघटना क्रियते स समालंकारः । यथा—

*विज्जाओ सकलाओ लच्छीए समं पआवरुद्दंमि ।
संघटिऊण सुसरिसं होइ कअच्छो सअं बह्मा ॥ १७० ॥

अत्र प्रतापरुद्रे सकलविद्यानां लक्ष्म्याश्च योगः ।

## तुल्ययोगितालंकारः ।

अथ गम्यमानौपम्यालंकारवर्गप्रस्तावः ।

**प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।
औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥ १७१ ॥**

यत्र केवलप्रस्तुतानां केवलाप्रस्तुतानां वा समानधर्मसंबन्धादौपम्यं गम्यते सा तुल्ययोगिता । प्रस्तुतानां यथा—

---

* विद्याः सकला लक्ष्म्या समं प्रतापरुद्रे ।
संघटय्य सुसदृशं भवति कृतार्थः स्वयं ब्रह्मा ॥

---

वस्तु विस्मयावहं, न पुनः सद्वितीयमिति भावः । 'जुगुप्साविराम—' इत्यादिना विस्मयादिति पञ्चमी । योजयति—अत्रेति ॥ द्वितीयोदाहरणं स्पष्टम् । तृतीयमुदाहरति—क्वेति ॥ अशिववृत्तानाममङ्गलचरितानामेकनिलयः । प्रेक्षंप्रेक्षं पुनःपुनः प्रेक्ष्य । आभीक्ष्ण्ये णमुलि द्विर्भावः । दिशिदिशि प्रतिदिशम् । यथार्थेऽव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तः । अथ विरोधगर्भालंकारान् निगमयन् समालङ्कारं संगतिपूर्वकं लक्षयति—एवमित्यादिना । विषमवैधर्म्यादिति ॥ विषमतृतीयभेदवैधर्म्यादित्यर्थः । अयं चालंकारः संबध्यमानवस्तुनोः श्लाघ्यत्वाश्लाघ्यत्वाभ्यां द्विविध इत्यनुसंधेयम् । विज्जाओ इति ॥ 'स्त्रियां

भद्रासनाध्यासिनि रुद्रदेवे तत्कीर्त्तयस्तद्द्विषदङ्गनाश्च ।
अनारतं भ्रान्तिविशेषभाजः प्रतिक्षणं पाण्डुरतां भजन्ते ॥ १७२ ॥

अत्र कीर्तीनां द्विषदङ्गनानां च प्राकरणिकत्वम् । पाण्डुरतां भजन्त इति समानधर्मः । अप्राकरणिकानां यथा—

कूर्मेन्द्रपन्नगाधीशहरित्करिकुलाद्रयः ।
मिथो निःसारतां प्राप्ताः काकतीन्द्रे महीभृति ॥ १७३ ॥

अत्र कूर्मेन्द्रप्रभृतीनामप्राकरणिकत्वम् । निःसारतां प्राप्ता इति समानधर्मः । अत्र गम्यमानौपम्यं न वास्तवम् ; किं तु वैवक्षिकम् ।

## दीपकालंकारः ।

**प्रस्तुताप्रस्तुतानां तु सामस्त्ये तुल्यधर्मतः ।**
**औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥ १७४ ॥**

यत्र प्रस्तुताप्रस्तुतानां समस्तानामेव समानधर्मसंबन्धेनौपम्यं गम्यते तद्दीपकम् । तस्य धर्मस्यादिमध्यान्तगतत्वेन त्रैविध्यम् । आदिदीपकं यथा—

*भाइ णलेण किअजुअं रहुउलदीवेण सोरिणा तेता ।
द्वावारो तवजणिणा कलीजुअं वीररुद्देण ॥ १७५ ॥

---

* भाति नलेन कृतयुगं रघुकुलदीपेन शौरिणा त्रेता ।
द्वापरस्तपोजनिना कलियुगं वीररुद्रेण ॥

---

शस उदोतौ' इति स्त्रीलिङ्गे विद्याशब्दे वर्तमानस्य शस ओदादेशः । अत्र श्लाघ्ययोः लक्ष्मीसरस्वत्योर्योगः; अश्लाघ्ययोस्तु 'धात्रा निम्बफलास्वादे काकलोको हि कल्पितः' इत्यादौ द्रष्टव्यः । गम्यौपम्यान् अलंकारान् प्रस्तौति—**अथेति** ॥ तत्र प्रस्तुताप्रस्तुतव्यासाश्रयां तुल्ययोगितामाह—**प्रस्तुतानामिति** ॥ केवलमित्युभयत्र संयोज्य व्याचष्टे—**यत्रेति** ॥ तुल्यस्य योगोऽस्यां संजात इति तुल्ययोगितेत्यर्थः । सा च प्रस्तुतानामप्रस्तुतानां च प्रतिस्वं गुणेन क्रियया च संबन्धे चतुर्विधा । तत्र केवलप्रस्तुतविषयां गुणाश्रयामुदाहरति—**भद्रासनेति** ॥ अन्योदाहरणमाह—**कूर्मेन्द्रेति** ॥ हरित्करिणो दिग्गजाः । एवमुभयत्र क्रियाश्रयत्वेनाप्युदाहार्यम् । ननु प्रस्तुताप्रस्तुतविषयस्यौपम्यस्य कथमत्रोपपत्तिस्तत्राह—**अत्रेति** ॥ केवलप्रस्तुतेषु

अत्र यथा नलरामधर्मपुत्रैः कृतत्रेताद्वापराः शोभन्ते, तथा वीररुद्रेण कलियुगं शोभत इत्यौपम्यं गम्यते । मध्यदीपकं यथा—

* भाईरहिए जलणिही राअई जोण्हाए पुण्णिमाचंदो ।
सुत्तीए कमलहवो कित्तीए पआवरुद्दो वि ॥ १७६ ॥

अत्र भागीरथ्यादिभिः समुद्रादयो यथा राजन्ते तथा कीर्त्या प्रतापरुद्रो राजत इत्यौपम्यं गम्यते । अन्तदीपकं यथा —

† सुरलोअं सुरणाहो णरलोअं वीररुद्दणरणाहो ।
फणिलोअं फणिणाहो रक्खइ णिरुपद्दवोज्जेअं ॥ १७७ ॥

अत्र यथा सुरलोकफणिलोकौ सुरनाथफणिनाथाभ्यां रक्षितौ, तथा वीररुद्रेण नरलोको रक्षित इत्यौपम्यं गम्यते ।

अथ पदार्थगतालंकारद्वयानन्तरं वाक्यार्थगतमलंकारद्वयं निरूप्यते ।

## प्रतिवस्तूपमालंकारः ।

**यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि ।**
**गम्यौपम्याश्रिता सा स्यात् प्रतिवस्तूपमा मता ॥ १७८ ॥**

---

* भागीरथ्या जलनिधी राजते ज्योत्स्नया पूर्णिमाचन्द्रः ॥
श्रुत्या कमलभवः कीर्त्या प्रतापरुद्रोऽपि ॥

† सुरलोकं सुरनाथो नरलोकं वीररुद्रनरनाथः ॥
फणिलोकं फणिनाथो रक्षति निरुपद्रवोद्वेगम् ॥

---

कस्यचिदुपमानत्वस्य केवलाप्रस्तुतेषु कस्यचिदुपमेयत्वस्य कल्प्यमानत्वादिति भावः । अथ प्रस्तुताप्रस्तुतसमासाश्रयं दीपकमाह—**प्रस्तुतेति** ॥ अत्र प्रस्तुताप्रस्तुतानां सामस्त्यमत एवौपम्यं वास्तवमिति तुल्ययोगितातो विशेषः । गम्यत्वं पुनरस्य पूर्ववदत्रापि इवाद्यभावात् । प्राकरणिकाप्राकरणिकमध्ये कुत्रचिन्निविष्टः समानो धर्मः पश्वर्थानुष्ठितः प्रयाजादिः पुरोडाशस्येवेतरांशस्योपकरोति । अत एव दीपसादृश्यात् दीपकमित्युच्यते । 'संज्ञायां च' इतीवार्थे कन्प्रत्ययः । तत्र विशेषमाह—**तस्येति** ॥ आदिमध्यान्तगतत्वेन आदिमध्यान्तवाक्यगतत्वेनेत्यर्थः । **भाईति** ॥ रघुकुलदीपेन शौरिणा रामेण । तपसो जनिरुपत्तिर्यस्य तेन तपोजनिना धर्मपुत्रेण । अत्र भातीति समानधर्मस्यादिवाक्यगतत्वात् आदिदीपकम् । **भाईरहिए इति** ॥

यथा—

प्रतापरुद्रनगरी सुजनैरुपशोभिता ।
सुजनाः स्फीतविभवैर्विभवाः स्थैर्यशालिनः ॥ २७१ ॥

एतत् स्थापनेनोदाहरणम् । अपोहनेनापि भवति ; यथा—

न तद्राज्यं प्रजा यत्र न भवन्त्यूर्जितश्रियः ।
न ताः प्रजाः प्रभुर्यासां न स्वयं काकतीश्वरः ॥ २७२ ॥

## मालादीपकालंकारः ।

**यदा तु पूर्वपूर्वस्य संभवेदुत्तरोत्तरम् ।**
**प्रत्युत्कर्षावहत्वं तन्मालादीपकमुच्यते ॥ २७३ ॥**

यत्र पूर्वपूर्वस्योत्तरोत्तरगुणावहत्वं स मालादीपकालंकारः ।

यथा—

भाग्यभूमा महीं प्राप्तः काकतीन्द्रभुजं मही ।
भुजः प्रतापमतुलं प्रतापश्च जगत्त्रयम् ॥ २७४ ॥

---

रूपात् । **समेति** ॥ किंचिद् दत्त्वा कस्यचिदादानं विनिमयः । समस्य समेन न्यूनस्याधिकेनाधिकस्य न्यूनेन विनिमय इति त्रेधा परिवृत्तिः । समेन समपरिवृत्तिमुदाहरति—**सुधेति** ॥ अतः काकतीन्द्रात् । गन्धसिन्धुरान् गन्धगजान् ; लक्षणमुक्तं नाटके । न्यूनेनाधिकपरिवृत्तिमुदाहरति—**उपायनमिति** ॥ अधिकेन न्यूनपरिवृत्तिमुदाहरति—**प्रतापेति** ॥ अनन्तरालङ्कारचतुष्टयस्य संगतिमाह—**अथेति** ॥ कारणमालां लक्षयति—**पूर्वपूर्वमिति** ॥ प्रतिशब्दो भिन्नक्रमः ; तेन पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमालेत्यर्थः । तथा व्याचष्टे—**यदेति** ॥ **विद्ययेति** ॥ विद्यादयो विनयादीन् प्रति हेतवः । ईषदेतद्वैपरीत्यादेकावलीं लक्षयति—**यत्रेति** ॥ पूर्वपूर्वं प्रत्युत्तरोत्तरस्य विशेषणत्वं स्थापनेनापोहनेन च द्वैविध्यमनुभवतीत्येकावलीं द्विधा करोति । आद्यमुदाहरति—**प्रतापेति** ॥ अत्र नगर्यादेः पूर्वपूर्वस्य सुजनाद्युत्तरोत्तरं स्थापनेन विशेषणत्वं भजते । द्वितीयमुदाहरति—**न तद्राज्यमिति** ॥ अत्र राज्यादेः पूर्वपूर्वस्य प्रजाद्युत्तरोत्तरमपोहनेन विशेषणत्वं भजते ।

## सारालंकारः ।

**उत्तरोत्तरमुत्कर्षः सारालंकार उच्यते ॥ २७५ ॥**

यथा—

जगत्सु वसुधा भाति तस्यामेकशिलापुरी ।
काकतीयान्वयस्तत्र तस्मिन् रुद्रनरेश्वरः ॥ २७६ ॥

सकलभुवनसारभूतं प्रतापरुद्रं विषयीकुर्वतश्चिरादस्यालंकारस्य सार इत्यन्वर्थाभिधानम् ॥

इति श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकार-
शास्त्रेऽर्थालंकारप्रकरणं समाप्तम् ।

—:०:—

---

पूर्वपूर्वं प्रत्युत्तरोत्तरस्योत्कर्षहेतुत्वेनैकावलीमुक्त्वोत्तरोत्तरं प्रति पूर्वपूर्वस्योत्कर्षहेतुत्वे मालादीपकमाह—यदेति । भाग्येति ॥ अत्र भाग्यातिशयादिभिर्मह्यादीनामुत्कर्षः क्रमेण विधीयते । परिशेषात् सारं लक्षयति—उत्तरोत्तरमिति ॥ जगत्स्विति ॥ अत्र जगदपेक्षया वसुधाया उत्कर्षः; तदपेक्षया एकशिलाया इत्यादिक्रमेणोत्कर्षो रुद्रनरेश्वरे विश्राम्यति ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथ-
सूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दार्यस्यानुजेन
कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने
रत्नापणाख्याने अर्थालंकारनिरूपणं नाम
अष्टमं प्रकरणम् ॥

———

## ॥ अथ मिश्रालंकारप्रकरणम् ॥

अथ संसृष्टिसंकरौ निरूप्येते । यथा लौकिकानामलंकाराणां हिरण्मयानां मणिमयानां च पृथक् सौन्दर्यहेतूनामन्योन्यसंबन्धेन चारुत्वातिशयो दृश्यते ; तथैव काव्यालंकाराणां रूपकादीनां मिथः संबन्धेन सौन्दर्यातिशयः प्रतीयते । स च संबन्धो द्विविधः—संयोगरूपः, समवायरूपश्चेति । संयोगे (मिश्र) तिलतण्डुलन्यायः । समवाये—(मिश्र) क्षीरनीरन्यायः । तिलतण्डुलन्यायेन संबन्धे संसृष्टिः । क्षीरनीरन्यायेन संबन्धे संकरः । अनयोः पृथक् चारुत्वातिशयहेतुत्वादलङ्कारधुरन्धरत्वम् ; न तु पूर्वोक्तालङ्कारशेषता ।

### संसृष्टिः ।

तत्र प्रथमं संसृष्टिर्निगद्यते ।

**तिलतण्डुलसंश्लेषन्यायाद् यत्र परस्परम् ।**
**संश्लिष्येयुरलंकाराः सा संसृष्टिर्निगद्यते ॥ १ ॥**

यत्र तिलतण्डुलन्यायेन परस्परसंबद्धा रूपकादयो भवन्ति सा संसृष्टिः । सा त्रिविधा—शब्दालंकारगतत्वेन, अर्थालंकारगतत्वेन, उभयालंकारगतत्वेन च । शब्दालंकारसंसृष्टिर्यथा—

शुम्भत्संभ्रमगन्धसिन्धुरधुरानिर्दारितोर्वीतला-
स्त्वङ्गत्तुङ्गतुरङ्गमप्रतिभया द्राक्स्यन्दनस्यन्दनाः ।
तीव्रारम्भसमुद्यदुद्भटभटाटोपस्फुरद्दिक्तटा
निःसीमाः प्रसरन्ति रुद्रनृपतेर्जैत्रप्रयाणोद्यमाः ॥ २ ॥

---

एकैकालंकारनिरूपणानन्तरं मिश्रालंकारनिरूपणं प्रतिजानीते—**अथेति** ॥ उक्तानामलंकाराणां क्वचित् सहभावे किं पार्थक्येन पर्यवसानम्? उतालंकारान्तरत्वमिति विचार्य, लौकिकालंकारन्यायेनालंकारान्तरत्वं सिद्धान्तयति—**यथेति** ॥ हिरण्मयानां सौवर्णानाम् । 'दाण्डिनायन' आदिसूत्रेण निपातनात् साधुः । पृथङ्मिथः संबन्धाभावेऽपि सौन्दर्यहेतूनां मिथः संबन्धे चारुत्वातिशयस्तथैव रूपकादीनामित्यर्थः । सौन्दर्यातिशयहेतोः संबन्धस्य द्वैविध्यमाह—**स चेति** ॥ उत्कटभेदः संयोगरूपः । अनुत्कटभेदः समवायरूप इत्यर्थः । आद्ये तिलतण्डुलन्यायेन संसृष्टिः । द्वितीये क्षीरनीरन्यायेन संकरः । अनयोः पृथगुपादानं न पूर्वशेषत्वमित्यर्थः । तत्र प्रथममुत्कटभेदनिबन्धनां संसृष्टिं लक्षयति—**तिलेति** ॥ तस्यास्त्रेधा विभागमाह—

अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः। अर्थालंकारसंसृष्टिर्यथा—

काकतीन्द्रचमूर्धत्ते महिमानमुदन्वतः।
ग्रसते या द्विषद्भूपध्वजिनीस्तटिनीरिव ॥ ३ ॥

अत्र निदर्शनोपमयोः संसृष्टिः। उभयसंसृष्टिर्यथा—

प्रतापरुद्रदोर्दण्डो मण्डलाग्रेण मण्डितः।
दृश्यते समरे वीरैरुत्फणः फणवानिव ॥ ४ ॥

अत्र वृत्त्यनुप्रासोपमयोः संसृष्टिः।

## संकरः।

अथ संकरो निरूप्यते।

**क्षीरनीरनयाद् यत्र संबन्धः स्यात् परस्परम्।**
**अलंकृतीनामेतासां संकरः स उदाहृतः ॥ ५ ॥**

यत्र क्षीरनीरन्यायेनालंकाराणां मिथः संबन्धो भवति स संकरः। तस्याङ्गाङ्गिभावेन एकवाचकानुप्रवेशेन संदेहेन च त्रैविध्यम्। तत्राङ्गाङ्गिभावसंकरो यथा—

उद्यद्बृंहितगर्जितैर्द्विपघटाकादम्बिनीसंभ्रमैः
क्षोणीभृत्कटकोपरोधपटुभिः प्रावृड्विहारा इव।
शत्रुस्त्रीबहुलाश्रुवृष्टिशमितक्ष्माचक्रतापोदया
यात्राः काकतिवल्लभस्य जगतामानन्दमातन्वते ॥ ६ ॥

---

सेति ॥ शब्दालंकारसंसृष्टिमुदाहरति—**शुम्भदिति** ॥ शुम्भत्संभ्रमा दीप्यमानसंरम्भा ये गन्धसिन्धुराः गन्धगजाः तद्धुरया तद्द्वारेण निर्दारितं निर्भिन्नमुर्वीतलं येषु तथोक्ताः। त्वङ्गद्भिः प्लवमानैस्तुङ्गतुरङ्गमैः प्रतिभया भयंकराः। द्राक्स्यन्दना शीघ्रधावनाः स्यन्दना रथा येषु ते तथोक्ताः। अत्र धुरधुरा भटभटेत्यत्र च्छेकानुप्रासोऽन्यत्र वृत्त्यनुप्रासश्च संसृज्यते। अर्थालंकारसंसृष्टिमुदाहरति—**काकतीन्द्रेति** ॥ उदन्वतो महिमानं धत्त इत्यत्रासंभवद्धर्मयोगेन प्रतिबिम्बकरणाक्षेपान्निदर्शना। तस्यास्तटिनीरिवेत्युपमायाश्च परस्परनैरपेक्ष्यात् संसृष्टिः। उभयसंसृष्टिमुदाहरति—**प्रतापेति** ॥ संकरं लक्षयति—**क्षीरेति** ॥ यत्रालंकाराणां क्षीरनीरन्यायादनुत्कटभेदः संबन्धः स संकर इत्यर्थः। तस्य त्रेधा विभागमाह—**तस्येति** ॥ क्रमेणोदाहरति—**उद्यदिति** ॥ क्षोणीभृत्कटकानां वैरिभूपालराज-

अत्र यात्राः प्रावृड्विहारा इवेत्युपमालंकारेण द्विपघटाकादम्बिनीत्यत्रोपमा प्रसाध्यत इति सजातीययोरङ्गाङ्गिभावः; कादम्बिनीव द्विपघटेति समासाश्रयणात्। क्षोणीभृत्कटकोपरोधेत्यत्र श्लेषमूलातिशयोक्तिः। विजातीयसंकरो यथा—

प्रतापरुद्रस्य कृपाणधारा प्रत्यर्थिफालेषु पतत्यमन्दम्।
प्रक्षालनायेव कृतस्य धात्रा तद्वर्तिनो दुर्लिपिकल्मषस्य ॥ ७ ॥

अत्र प्रक्षालनायेवेत्युत्प्रेक्षया दुर्लिपिकल्मषस्येत्यत्र रूपकं प्रसाध्यत इति विजातीययोरङ्गाङ्गिभावः। एकवाचकानुप्रविष्टसंकरो यथा—

विजितारिपुरो मूर्तौ विलसत्सर्वमङ्गलः।
भुवि शंभुरिवाभाति काकतीयनरेश्वरः ॥ ८ ॥

अत्र विजितारिपुर इत्यर्थसाम्यादुपमा, विलसत्सर्वमङ्गल इति शब्दसाम्यात् श्लेषश्च शम्भुरिवेत्येकस्मिन्निवशब्देऽनुप्रविष्टौ।

संदेहसंकरो यथा—

---

धानीनाम्; अन्यत्र पर्वतनितम्बानामुपरोधपटुभिर्निरोधनसमर्थैः। 'कटकं वलये सानौ राजधानीनितम्बयोः' इति **विश्वः**। शत्रुस्त्रीबहुलाश्रुवृष्ट्येव शमितः क्ष्माचक्रतापोदयो भूमण्डलसंतापातिशयो यासु तास्तथोक्ताः। दुष्टनिग्रहेण भूभारोऽवतरतीति भावः। सजातीयसंकरं योजयति—**अत्रेति** ॥ **उपमा प्रसाध्यत इति** ॥ रूपकत्वे द्विपघटारूपविषयस्थगने कादम्बिनीरूपोपमानस्य सविशेषणत्वं नोपमेयस्य। अतोऽधिकोपमं नाम दोषः स्यात्। तस्मादुपमा प्रसाध्यत इति भावः। यात्राः प्रावृड्विहारा इवेत्यस्या अनुग्राह्यत्वादङ्गित्वम्। द्विपघटाकादम्बिनीत्यस्या अनुग्राहकत्वादङ्गत्वम्। अतोऽनयोरङ्गाङ्गिभावेन संकरः। अङ्गिनोः अन्योन्यं चमत्कारहेतुत्वान्मिश्रणेऽतिरामणीयकं द्रष्टव्यम्। तर्हि द्विपघटाकादम्बिनीत्यत्र केन समासेनोपमालाभ इत्याकाङ्क्षायामाह—**कादम्बिनीव द्विपघटेति** ॥ 'उपमितं व्याघ्रादिभिः' इति समासः। अभ्युच्चयमाह—**क्षोणीभृदिति** ॥ क्षोणीभृत्कटकः शब्देन शत्रुराजधानीपर्वतनितम्बयोरभिधानाच्छ्लेषः। उभयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरित्यर्थः। इयं च द्विपघटाकादम्बिनीत्यत्रोपमाया अङ्गम्। तेनातिशयोक्त्याऽनुगृहीतया तया यात्राः प्रावृड्विहारा इवेत्युपमाऽनुगृह्यत इति फलितम्। विजातीयसंकरमुदाहरति—**प्रतापेति** ॥ कृपाणस्य धारा कोटिरुदकधारा च। अमन्दम् अनल्पम्। तद्वर्तिनः प्रत्यर्थिफालवर्तिनो दुर्लिपिरेव कल्मषं पङ्कं तस्य क्षालनायेवेत्युत्प्रेक्षा। अत्र क्षालनयोग्यस्य कल्मषस्य प्राधान्यं रूपकेणैव लभ्यते; नान्यथेत्युत्प्रेक्षया रूपकं प्रसाध्यत इति रूपकोत्प्रेक्षयोर्विजातीय-

जातः प्रतापरुद्रेन्दुः काकतीयान्वयाम्बुधौ ।
धत्ते जनचकोराणां प्रसादज्योत्स्नयाऽमृतम् ॥ ९ ॥

अत्र काकतीयकुलाम्बुधौ इत्यादौ रूपकोपमयोः संदेहसंकरः । काकतीयान्वय एवाम्बुधिः, काकतीयान्वयोऽम्बुधिरिवेति समासद्वयसंभवात् । न चात्र साधकं बाधकं वा प्रमाणमन्यतरस्यास्तीति संदेह एव पर्यवस्यति । साधकबाधकप्रमाणसंभवे तु संदेहनिवृत्तिः । अत्र साधकं यथा—

प्रतापरुद्रनृपतेः पारिजातात् समुद्भवाः ।
वतंसयन्ति दिङ्नार्यो मधुराः कीर्त्तिमञ्जरीः ॥ १० ॥

अत्र कीर्त्तय एव मञ्जर्य इति रूपकालंकारे वतंसयन्तीति साधकं प्रमाणम् । [अ]वतंसीकरणेनाभेदप्रतीतिः । बाधकं यथा—

काकतीन्द्रस्य निःसाणध्वनौ दिक्षु विजृम्भिते ।
व्याकुलीकृतसत्त्वोऽभूत् प्रतिपक्षबलार्णवः ॥ ११ ॥

---

योरन्योन्यसापेक्षत्वादङ्गाङ्गिभावेन संकरः । एकवाचकानुप्रविष्टं संकरमुदाहरति—**विजितेति** ॥ योजयति—**अत्रेति** ॥ विजितारिपुर इत्यत्र शब्दपरिवृत्तिसहिष्णुत्वादर्थसाम्यम् । विलसत्सर्वमङ्गल इत्यत्र तदभावाच्छब्दसाम्यम् । तावुपमाश्लेषावेकस्मिन्निवशब्देऽनुप्रविष्टौ । तस्योभयोपकारित्वादिति भावः । संदेहसंकरमुदाहरति—**जात इति** ॥ योजयति—**अत्र . . . कुलाम्बुधावित्यादौ . . . समासद्वयसंभवादिति** ॥ मयूरव्यंसकादीनां च आकृतिगणत्वाद् रूपकोपमितसमासद्वयसंभवादित्यर्थः । नन्वत्रामृतदानस्य चन्द्र एव प्रसिद्धत्वात् प्रतापरुद्र एवेन्दुरिति रूपकमेव नोपमेति चेन्नैवम् । औपचारिकस्यामृतदानस्य प्रतापरुद्रेऽपि संभवात् उपमाया बाधकाभावात् । तेनात्र रूपकोपमयोः संदेह एव पर्यवस्यतीत्याह—**न चेति** ॥ साधकमनुकूलं, बाधकं प्रतिकूलम् । तत्सद्भावे संदेह एव निवर्तेत इत्यर्थः । तर्हि कुत्र साधकं, कुत्र वा बाधकमित्याकाङ्क्षायां क्रमेण दर्शयति—**प्रतापेति** ॥ प्रतापरुद्रनृपतिरूपात् पारिजातात् । वतंसयन्तीत्यत्र 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इत्यकारलोपः । अत्र वतंसीकरणं मञ्जरीष्वेवानुगुणमिति रूपकपरिग्रहे साधकमित्याह—**अत्रेति** । तत्रोपोद्बलकमाह—**वतंसीकरणेनाभेदप्रतीतिरिति** ॥ न पुनरुपमायामिव भेदाभेदप्रतीतिरिति भावः । बाधकं दर्शयति—**काकतीन्द्रस्येति** ॥ दिक्षु निस्साणध्वनौ विजृम्भिते व्याप्ते सति । प्रतिपक्षबलमेवार्णवो व्याकुलीकृतानि कलुषीकृतानि

अत्र प्रतिपक्षबलार्णव इत्युपमाया व्याकुलीकृतसत्त्व इति बाधकं प्रमाणम्; 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनुशासनेन सामान्यप्रयोगस्योपमाबाधकत्वात् । अतः पारिशेष्याद्रूपकालंकारः । एवं यथासंभवमन्येषामलंकाराणां संसृष्टिसंकरौ बोद्धव्यौ तत्र तत्र प्रबन्धेषु ॥

इति श्रीविद्यानाथमहोपाध्यायकृतौ प्रतापरुद्रयशोभूषणेऽलंकार-
शास्त्रे मिश्रालंकारप्रकरणं समाप्तम् । प्रतापरुद्रीयं
नामालंकारशास्त्रं समाप्तम् ॥

—o—

---

सत्त्वान्यन्तःकरणानि प्राणिनश्च यस्य स तथोक्तः। बाधकं योजयति—**अत्रेति** ॥ प्रतिपक्षबलमर्णव इवेत्युपमितसमासस्य व्याकुलीकृतसत्त्व इति सामान्यप्रयोगस्य बाधकत्वात् परिशेषात् रूपकमेवेत्यर्थः । अलंकारान्तरसंकरसंसृष्टिप्रपञ्चः प्रबन्धान्तरेषु द्रष्टव्य इत्याह—**एवमिति** ॥ विवेकिनामेतावतैवेतरदपि सुबोधमिति विस्तरभीरुभिरस्माभिरुपरम्यत इति सर्वमवदातम् ॥

जगति निखिलविद्यासिन्धुमुष्टिन्धयानां
परभणितिपरीक्षा युज्यते सज्जनानाम् ।
तदिह मम निबन्धे दूषणं भूषणं वा
भवति यदि विदग्धैस्तद्ध्यवश्यं विमृश्यम् ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथ-
सूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्यानुजेन
कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने
रत्नापणाख्याने मिश्रालंकारनिरूपणं नाम
नवमं प्रकरणम् ॥

—:o:—

## पद्मबन्धः ।




याता यस्यासमग्रानतिमिह कनकास्थानसक्तासनाया
यानासक्तासनस्था सुखयतु कमलाभ्यासगुज्ञानमाया ।
या मानज्ञा सुसभ्या क्षितिपतितिलकं ज्ञातिरक्ता सगेया
यागे सक्ता रतिज्ञा सुकृतिषु फलितग्रामसस्यायताया ॥ (पृ. २४९-५०)

## चक्रबन्धः ।



लक्ष्मीवीक्षितवैभवस्य जगतां नाथस्य भद्रश्रियो
दिक्ष्वारब्धनिजप्रतापजनितां भाक्तृदूधुरां यच्छतः ।
नित्यं रुद्रजनाधिपस्य जयिनो भाति प्रकाशं स्थिरा
राजत्पालनमोदितात्मनि भुजे योग्याश्रितत्वाद्धरा ॥ (पृ. २५०-१)

## नागबन्धः ।




ओजस्ये रुद्रदेवे विभवति महिमत्याजितान्यप्रतापे

विद्यावर्येऽभिनेतर्युरुहरिचरितं विश्वविस्तारभाजि ।

वैरित्राता भजन्ते वनमतिमलिनख्यातयो देहविद्वा

वन्यैरध्वन्यवारि क्षतिमति विविधे जन्तुभिः स्थानभाजः ॥ (पृ. २५२)

## ॥ लक्ष्यश्लोकसूची ॥

—o—

## प्रतापरुद्रीयोपात्तानां ग्रन्थकाराणां सूची



## प्रतापरुद्रीयोपात्तग्रन्थसूची

# प्रतापरुद्रीयोद्धृतवाक्यानां साकरा सूची

| पुटम् | वचनानि | आकरः |
|---|---|---|
| ६३ | अगूढमपरस्याङ्गम् | (काव्यप्रकाशः ५-१) |
| ५ | अथातो धर्मजिज्ञासा | (पूर्वमीमांसासूत्रम् १-१-१) |
| ३० | अदोषौ सगुणौ | (काव्यप्रकाशः १.४.) |
| ३१४ | अनेकार्थस्य शब्दस्य | (काव्यप्रकाशः २-१९) |
| ६२ | अलंकारोऽथ वस्त्वेव | (काव्यप्रकाशः ४.१५-१६) |
| ६ | आदिराजयशोबिम्बम् | (काव्यादर्शः १-५) |
| १५७ | आलम्बनगुणश्चैव | (रसकलिका पृ-०) |
| ७ | उदारचरितनिबन्धना प्रबन्धप्रतिष्ठा | (रुद्रभट्टः) (?) |
| ३४४ | उपमितं व्याघ्रादिभिः सामान्याप्रयोगे | (अष्टाध्यायी २-१-५६) |
| ७ | उपश्लोक्यस्य माहात्म्यात् | (भामहः) (?) |
| २४३ | उपस्कुर्वन्ति तं सन्तम् | (काव्यप्रकाशः ८-२) |
| १६० | एकत्रैवानुरागश्चेत् | (रसकलिका पृ-४५) |
| ७ | कवेरल्पाऽपि वाग्वृत्तिः | (भोजः) (?) |
| १६० | कारणान्यथ कार्याणि | (काव्यप्रकाशः ४-४) |
| ४ | काव्यं यशसेऽर्थकृते | (काव्यप्रकाशः १-२) |
| ५ | काव्यालापांश्च वर्जयेत् | (स्मृतिः) |
| ३२ | कैशिक्यारभटी चैव (दशरूपकम्) | (वस्तुतः शृ. तिलकम् १-१९) |
| ७ | गुणालङ्कारचारुत्व- | (उद्भटः) (?) |
| २५७ | तत्र तस्येव | (अष्टाध्यायी ५-१-११६) |
| २५६ | तेन तुल्यं क्रिया चेद् वतिः | (अष्टाध्यायी ५-१-११५) |
| ७ | नायकगुणग्रथिताः | (साहित्यमीमांसा) |
| ४ | परिवड्ढइ विण्णाणं | (प्रवरसेनकृतं सेतुबन्धमहाकाव्यम् १-१०) |
| ७२ | प्रख्यातोत्पाद्यमिश्रत्व- | (दशरूपकम् १-१५) |
| ७३ | बीजबिन्दुपताकाख्य- | (दशरूपकम् १-१८) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| १६१ | भावस्य शान्तिरुदयः | (दशरूपकम्) (वस्तुतः का. प्र. ४-३) |
| ७१ | मधुरोद्धतभेदेन | (दशरूपकम् १-१०) |
| ७३ | मुखं प्रतिमुखं गर्भः | (दशरूपकम् १-२४) |
| २४२ | यो हेतुः काव्यशोभायाः | (रुद्रभट्टः) (?) |
| ८६ | रङ्गं प्रसाद्य मधुरैः | (दशरूपकम् ३-४) |
| ६३ | रसभावतदाभास- | (शृङ्गारतिलकम्) (वस्तुतः का. प्र. ४-३) |
| २०८ | रसभावतदाभास- | (अलंकारसर्वस्वम् सू. ८२-८३) |
| २०८ | रसः सर्वोऽपि सम्पूर्णः | (रसकलिका १-४९) |
| १५५ | विभावैरनुभावैश्च | (रसकलिका पृ. १) (दशरूपकम् ४-१) |
| ८० | विष्कम्भचूलिकाऽङ्कास्य- | (दशरूपकम् १-५८) |
| २०६ | शङ्काऽसूया भयं ग्लानिः | (शृङ्गारतिलकम् ३-२८) |
| २०६ | शृङ्गारबीभत्सरसौ | (शृङ्गारतिलकम् ३-२१) |
| १५६ | सजातीयैर्विजातीयैः | (रसकलिका पृ. ६-७) |
| २४१ | सङ्घटनाधर्मत्वेन | (अलंकारसर्वस्वम्-अनुवादः) |
| १९७ | संयुक्तयोस्तु सम्भोगः | (शृङ्गारतिलकम् १-२१) |
| २०६ | हास्यो भवति शृङ्गारात् | (शृङ्गारतिलकम् ३-२२) |

———

# रत्नापणोपात्तग्रन्थकारसूची

—०—

## रत्नापणोपात्तग्रन्थसूची

---

# रत्नापणोपात्तानां प्रमाणानां साकरा सूची

| पुटम् | वचनानि | आकरः |
| --- | --- | --- |
| २६७ | अधीगर्थदयेशां कर्मणि | (अष्टाध्यायी २-३-५२) |
| १९ | अधीनो निघ्न आयत्तः | (नामलिङ्गानुशासनम्) |
| १८ | अधीरा परुषैः वाक्यैः | (रसार्णवसुधाकरः १-९९) |
| २८६ | अध्यवसितप्राधान्ये | (रुचकः अ. स. २२) |
| ११९ | . . . अनक्षे | (अष्टाध्यायी ५-४-७४) |
| २५० | अनन्वये च शब्दैक्यं | (अलङ्कारसर्वस्वं, लाटानुप्रासप्रकरणम्) |
| ४० | अनन्वितोऽर्थो | (काव्यप्रकाशः ५.४) |
| ७१ | अनुकर्तृस्थितो योऽर्थो | (संगीतचूडामणिः) |
| १९२ | अनुगतं रहोऽस्मिन् | (पदमञ्जरी ५-४-८१) |
| १५१ | अनुग्रहे निग्रहे च | (मानसोल्लासः २-८-६९४) |
| ३२ | अनुदरा कन्या | (महाभाष्यम् १-४-२४) |
| १५ | अनुदात्तेतश्च हलादेः | (अष्टाध्यायी ३-२-१४९) |
| १७, ४२ | अनुपसर्गाज्ज्ञः | (अष्टाध्यायी १-३-७६) |
| १८७ | अनुभावश्चतुर्धा स्यात् | (भावप्रकाशनं, १-अधिकारः पृ. ६) |
| १२ | अनुर्लक्षणे | (अष्टाध्यायी १-४-८४) |
| ३२ | अनुल्बणत्वाद् व्यङ्ग्यानां | (अलंकारसुधानिधिः) |
| ७६ | अनेकप्रकारप्रयोजनरसहेतुः | (द्रष्टव्यो धनिकस्यावलोकः १-२३) |
| १६५ | अनेकविधम् | (अन्ये) |
| २८८ | अनेन सार्धं विहराम्बुराशेः | (रघुवंशः-६-५७) |
| २२७ | अनौचित्यादृते नान्यत् | (ध्वन्यालोकः, ३-उद्द्योतः) |
| ६९ | अन्तेऽनुष्टुभमार्या वा | (साहित्यचिन्तामणिः १२ श्रव्यकाव्यनिरूपणम्) |
| १५९ | अन्नमयप्राधान्येन | (अन्ये) |
| ८० | अन्यत्राङ्कद्वयमध्ये | (अन्ये) |
| २११ | अन्यार्थमवाचकम् | (अपरे) |
| १०७ | अन्येषामपि दृश्यते | (अष्टाध्यायी ६-३-१३७) |
| ४० | अन्वयव्यतिरेकाभ्याम् | (प्राभाकराः) |
| २४४ | अन्वयव्यतिरेकौ | (काव्यप्रकाशः ८-२) |
| १९२ | अन्ववतप्ताद् रहसः | (अष्टाध्यायी ५-४-८१) |
| ७४ | अपताके निवेशः स्यात् | (कोहल इति भावप्रकाशः) |
| ६ | अपदोषतैव | (शिशुपालवधः ९-१२) |
| ४८ | अपरिच्छिन्नविषयम् | (भावप्रकाशनं, ५- अधिकारः पृ १२०) |
| २३३ | अपुष्टार्थनिराकरणाय | (प्रतापरुद्रीये) |
| ७ | अपूर्वं च | (भाट्टाः) |
| ३२४ | अप्रतीतप्रतीतौ स्यात् | (वि. चक्रवर्ती ९२ श्लोकः) |
| १०७ | . . . अप्रियादिषु | (अष्टाध्यायी ६-३-३४) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २९२ | अप्रस्तुतं प्रतीतं चेत् | (अलंकारसर्वस्वव्याख्या सञ्जीवनी, ५४ श्लोकः) |
| ३१२ | अभवन् वस्तुसंबन्धः | (उद्भटः, का. अ. सा. सं. ५-१८) |
| ८६ | अभिगम्यगुणैर्युक्तः | (दशरूपकम् ३-२२) |
| ४८, २९९ | अभितःपरितः | (वार्त्तिकम् २-३-२) |
| ७१ | अभिपूर्वस्तु णीञ्धातुः | (नाट्यशास्त्रम् ८-७) |
| ७१ | अभिव्यञ्जन् विभावादि | (संगीतचूडामणिः) |
| २८७ | अभेदाध्यवसायोऽपि | (विद्याचक्रवर्ती, ४४ श्लोकः) |
| २२८ | अभ्युन्नता पुरस्तात् | (शाकुन्तलम् ३-७) |
| ८२ | अम्बरग्रहणादीनि प्रत्यक्षाणि | (भावप्रकाशनं ८- अधि. पृ. २३६) |
| ६८ | अयुजि ननरला: | (वृत्तरत्नाकरः) |
| २०५ | अयं स रशनोत्कर्षी | (भारतं स्त्रीपर्व २४-१९) |
| १५५ | अयं स रसः | (भट्टलोल्लटः) |
| १०, १३ | अरुर्द्विषदजन्तस्य मुम् | (अष्टाध्यायी ६-३-६७) |
| ५ | अर्जेर्विडप्पः | (प्राकृतसूत्रम्) |
| ७४ | अर्थप्रकृतयः | (केचित्) |
| ८५ | अर्थभेदेन प्रस्तुतोप- | (केचित्) |
| ५३ | अर्थशक्त्युद्भवः | (काव्यप्रकाशः ४-उल्लासः) |
| ८० | अर्थोपक्षेपकैः सूच्यम् | (भावप्रकाशनं ७-अधि. पृ. २१४) |
| ८२ | अर्वाक् प्रका(हा)रात् | (भावप्रकाशनं ८-अधि. पृ. २३६) |
| १३ | अर्हे कृत्यतृचश्च | (अष्टाध्यायी ३-३-१६९) |
| ६०, २२७ | अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा | (अष्टाध्यायी ३-७-१८) |
| ४१ | अल्पे | (अष्टाध्यायी ५-३-८५) |
| १० | अवश्यं कस्यचित् | (महाभाष्यम् २-१-१) |
| ७४ | अवस्थाः पञ्च कार्यस्य | (भावप्रकाशनं ७-अधि. पृ. २०६) |
| १५६ | अवस्थिताश्चिरं चित्ते | (भावप्रकाशनं १-अधि. पृ. ४) |
| ६ | अविभाव्यतारकम् | (शिशुपालवधः ९-१२) |
| २८८ | अविरलविलोलजलदः | (रुद्रटस्य काव्यालंकारः ७-६०) |
| २०५ | अविरोधी विरोधी वा | (ध्वन्यालोकः ३-८०) |
| ४५ | अवृत्तिर्मध्यवृत्तिर्वा | (ध्वन्यालोकः ३-२४ ; काव्यप्रकाशः ८-उल्लासे च) |
| ९ | अवे तॄस्त्रोर्घञ् | (अष्टाध्यायी ३-३-१२०) |
| ३१ | अव्यङ्ग्यं त्ववरं स्मृतम् | (काव्यप्रकाशः १-५) |
| ३०७ | अव्ययीभावे शरत्प्रभृतिभ्यः | (अष्टाध्यायी ५-४-१०७) |
| ३४ | अशब्दव्यापारो लक्षणा | |
| ११९ | अश्वानां तु गतिर्धारा | (वैजयन्ती) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २३ | आभिरूप्यमकाठिन्यं | (भावप्रकाशनं अधि-५. पृ. १०३-४) |
| ८३ | आमुखविशेषः प्रस्तावना | (केचित्) |
| २३९ | आम्रेडितं द्विस्त्रिरुक्तं | (अमरः) |
| २९३ | आयुधानां ध्वजाद्याया: | (सामुद्रिकशास्त्रे) |
| ३३ | आयुर्वेदम् | (काव्यप्रकाशः) |
| ३३ | आयुर्घृतम् | (श्रुतिः ; महाभाष्यम् १-१-५९) |
| १४० | आलोको वन्दिभाषणे | (विश्वः) |
| ९,१७६ | आवेध्यारोप्यविक्षेप्य- | (भावप्रकाशनं ३-अधि. पृ. ७३) |
| १४१ | आशिषो वाचनं कृत्वा | (वृद्धवसिष्ठः) |
| २८३ | आशीरुरगदंष्ट्रायां | (विश्वः) |
| २ | आशीर्नमस्क्रिया वस्तु- | (काव्यादर्शः १-१४) |
| २० | आ सर्वनाम्नः | (अष्टाध्यायी ६-३-९१) |
| ८३ | आसूत्रयन् गुणान् नेतुः | (भावप्रकाशनं ६-अधि. पृ. २८८) |
| १९ | आस्कन्दितं धौरितकं | (नामलिङ्गानुशासनम्) |
| ७१ | आहार्याभिनयो नाट्योचित- | |
| २३-२५० | इगुपधज्ञाप्रीकिरः कः | (अष्टाध्यायी ३-१-१३५) |
| १९४ | इरसदादिषु | (प्राकृतसूत्रम् १-११) |
| ५९ | इवस्य पिव | (प्राकृतसूत्रम् १०-४) |
| १६३ | इदमेव मम प्रियं | |
| २६५ | इवशब्दान्तरप्रयोगे | (विद्याधरः) |
| २५७ | इवेन समासो विभक्त्यलोपश्च | (वार्त्तिकम् २-२-१८) |
| १३४ | इष्टार्थोपायानुसरणं | (प्रतापरुद्रीयं, नाटकप्रकरणम् पृ. ७३) |
| १८५ | इसुसुक्तान्तात् | (अष्टाध्यायी ७-३-५१) |
| ३०५ | इह हि निषेधो वैपरीत्यं | (रुचकः, अ. स. विचित्रालङ्कारे-अनुवादः) |
| १९९ | ईर्ष्यामानः स्त्रीणामेव | (हेमचन्द्रः २-७) |
| १५१ | ईश्वरप्रीणनार्थं यत् | (व्यासः) |
| १८८ | ईषदर्थे दरशब्दोऽव्ययम् | (त्रिविक्रमः) |
| २५७,२५९ | ईषदसमाप्तौ— | (अष्टाध्यायी ५-३-६७) |
| १२२ | ईषद्दुस्— | (अष्टाध्यायी ३-३-१२६) |
| २० | उत्क उन्मनाः | (अष्टाध्यायी ५-२-८०) |
| २८९ | उत्क्षिप्तं सह कौशिकस्य | (हनुमन्नाटकम् १-२३) |
| १२० | उच्चर्चति च | (आख्यातचन्द्रिका १-५-१३) |
| २७ | उत्पन्ना रतिरेकत्र | (भावप्रकाशनं, ६-अधि. पृ. १३१) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| १३८ | उत्पातदोषादिविवर्जितेऽह्नि | (वृद्धवसिष्ठः) |
| २७४ | उत्प्रेक्षाश्रयः संदेहः | (केचित्) |
| २७५ | उत्प्रेक्षैव इत्यन्ये | (अलंकारसर्वस्वम् संदेहप्रस्तावान्ते) |
| २१५ | उत्सर्गौ वर्जने त्यागे | (विश्वः) |
| १६५ | उत्साहः सर्वकृत्येषु | (भावप्रकाशनं २-अधि. पृ. ३५) |
| ११ | उत्सूते हर्षमित्येषः | (भावप्रकाशनं ३-अधि पृ. ७५) |
| ९१ | उत्सृष्टिकाङ्क इति | (दशरूपावलोकः ३-७३) |
| २५३ | उदन्वानुदधौ च | (अष्टाध्यायी ८-२-१३) |
| १२९ | उदये च मुनेरगस्त्यनाम्नः | (वराहमिहिरकृतबृहत्संहिता १२-७) |
| २० | उदात्ता केशवासोऽङ्गम् | (दशरूपकम् २-२५) |
| ३३७ | उदाहरणमलङ्कारप्रकरणे | (प्रतापरुद्रीये पृ. २०८) |
| २३६, २७१ | उदि कूले रुजिवहोः | (अष्टाध्यायी ३-२-३१) |
| २२७ | उदितो वा | (अष्टाध्यायी ७-२-५६) |
| ११३ | उदोऽनूर्ध्वकर्मणि | (अष्टाध्यायी १-३-२४) |
| ३१ | उद्देश एव तात्पर्यम् | (न्यायकुसुमाञ्जलिः स्तबकः-५, श्लोकः-६) |
| १२४ | उरो ललाटं वदनं च पुंसां | (वराहमिहिरकृतबृहत्संहिता ६७-८५) |
| ७९ | उपक्षेपादयः | (नाटकप्रकाशः) |
| ११ | उपचारो यथासत्वं | (भावप्रकाशनं, ५-अधि पृ. ११२) |
| १२८ | उपदंशस्तृतीयायाम् | (अष्टाध्यायी ३-४-४७) |
| १० | उपपदमतिङ् | (अष्टाध्यायी २-२-१९) |
| २६१ | उपमानकर्तुः | (भाष्यकारः ३-१-८) |
| २२८ | उपमानस्य जातिप्रमाणकृतं | (काव्यप्रकाशः१० उल्लासः उपमादोषप्रकरणम्) |
| २५९ | उपमानादाचारे | (अष्टाध्यायी ३-१-१०) |
| ३१३ | उपमानाद् यदन्यस्य | (काव्यप्रकाशः १०-१०५) |
| २६३ | उपमानानि सामान्यवचनैः | (अष्टाध्यायी २-१-५५) |
| २६० | उपमाने कर्मणि च | ( ,, ३-४-४५) |
| ३४२ | उपमितं व्याघ्रादिभिः | (अष्टाध्यायी २-१-५६) |
| ८५ | उपरि प्रस्तुतम् ओं नमः शिवाय | (महेश्वरानन्दे इति र. अ. सु. ३-१७०-१) |
| ३३४ | उपसर्गस्य घञि अमनुष्ये बहुलम् | (अष्टाध्यायी ६-३-१२२) |
| १३३ | उपसर्गस्यायतौ | ( ,, ८-२-१९) |
| १२६ | उपान्वध्याङ्वसः | ( ,, १-४-४८) |
| ४६,१०९,१११,२२५ | ऋक्पूरब्धूः . . . | ( ,, ५-४-७४) |
| ८३, ९४ | ऋतुं कञ्चिदुपादाय | (दशरूपकम् ३-४) |
| १८४ | ऋतोऽत् | (प्राकृतसूत्रम् १-२७) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| ७४ | कथाशरीरकारणानि | (भोजराजः शृ. प्र. १२-प्रकाशारम्भे) |
| १४० | कनिक्रदज्जनुषं ममाग्ने | (ऋक्. २-४२-१) |
| ९० | कपटस्य स्वरूपं तु | (भावप्रकाशनं, ८-अधि. पृ. २४९) |
| २८२ | कपोलफलकावस्याः | (उद्भटः, का. अ. सा. सं. ३७) |
| २९३ | करात् कटाभ्यां मेढ़ाच्च | (पालकाप्ये) |
| १२८ | करिणां घटना घटा | (नामलिङ्गानुशासनम् ) |
| २२९ | करीक्षुजीमूतवराहशङ्ख- | (गरुडपुराणे ३८-१ ; तथा बुद्धभट्टीयं रत्नशास्त्रम् मौक्तिकपरीक्षा १) |
| २५० | कर्णिकादि लिखेद् वर्णान् | |
| ६ | कर्तरि च | (अष्टाध्यायी २-२-१६) |
| १३, ९९, २३६, २३७ | कर्तरि भुवः | ( ,, ३-२-५७) |
| १२२, १२३, २६१ | कर्तुः क्यङ् सलोपश्च | ( ,, ३-१-११) |
| २५० | कर्मण्यण् | (अष्टाध्यायी ३-२-१) |
| १०७ | कर्मसाधनस्यैव | (भोजः स. क. आ. व्याकरणे (?)) |
| २४८ | कलयन्त्यनुक्षणमनेकलयम् | (शिशुपालवधः ४-३६) |
| २७१ | कल्याणमक्षयस्वर्णे कल्याणं | (विश्वः) |
| २०७ | कवेर्विवक्षया यत्र (यस्य) | (भावप्रकाशनं, ६-अधि. पृ. १५९) |
| २८५ | कस्तूरीतिलकन्ति फालफलके | (अ. स. उत्प्रेक्षाप्रकरण उदाहृतम्) |
| ३२० | कस्त्वं भोः, कथयामि दैवहतकं | (ध्वन्यालोके ३-उद्द्योते उदाहृतम्) |
| १९९ | कः प्रिये सुभगमानिनि मानः | (किरातार्जुनीयम् ९-४०) |
| ६७ | काकुयोजनायाम् | (लोचनम्) |
| २२ | कामतन्त्रेषु निपुणः | (भावप्रकाशनं, ५-अधि. पृ. १०६) |
| १६२ | कामोपचारः सम्भोगः | (भावप्रकाशनं, ४- ,, पृ. ७७) |
| ९८ | कारणेऽपि कथं तर्के | (भावप्रकाशनं ९-अधि. पृ. २७५) |
| ३१२ | कारीषोऽग्निरध्यापयति | (महाभाष्यम् ३-१-२६) |
| ११८ | कार्मुकं तु चतुर्हस्तम् | (वैजयन्ती) |
| २९४ | कार्यस्यैव प्रधानत्वात् | (शालिकानाथः) |
| २७५ | कार्यत्वेन नियोज्यं च | (मीमांसानिष्णाताः) |
| ११२ | कालाट्ठञ् | (अष्टाध्यायी ४-३-११) |
| ७२ | कालो लघ्वादिमितया | (संगीतरत्नाकरः ५-३) |
| ३२२ | काव्यग्रहणं तर्कवैलक्षण्यार्थम् | (रुचकः अ. स. काव्यलिङ्गप्रकरणम् ) |
| २४१ | काव्यशोभायाः कर्तारो धर्माः गुणाः | (वामनः ३-१-१) |
| ५ | काव्यालापांश्च वर्जयेत् | (स्मृतिः) |
| ९५ | किं ब्रवीष्येवमित्यादि | (दशरूपकं १-६७) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २८९ | कुमुददलैः सह संप्रति | (रुद्रटस्य काव्यालंकारः ७-१८) |
| ५०, ११७ | कुलकुक्षिग्रीवाभ्यः- | (अष्टाध्यायी ४-२-९६) |
| ३१ | कुशलप्रवीणादिशब्दानां तु | (आचार्यहेमचन्द्रः १-१८) |
| १६१ | कृच्छ्रादूरुयुगं व्यतीत्य | (लोचनं २-उ. रत्नावल्या २-१० उदाहृतम्) |
| ११४ | कृतादीनां व्यवस्थेयम् | (सूर्यसिद्धान्तः) |
| २४ | कृताधराङ्गसंस्कारा | (भावप्रकाशनं, ५-अधि. पृ.) |
| २५० | कृत्यल्युटो बहुलम् | (अष्टाध्यायी ३-३-११३) |
| ४१ | केऽणः | ( ,, ७-४-१३) |
| ६ | को मोहः कः शोकः | (ईशावास्योपनिषत्-७) |
| ५९ | क्तेन च पूजायाम् | (अष्टाध्यायी २-२-१२) |
| २५८ | क्यचि च | ( ,, ७-४-३३) |
| २६१ | क्यचीवाद्युपमेयौ | (काव्यप्रकाशः १०-उल्लासः) |
| २९९ | क्रमाज्जातिगुणद्रव्यक्रियायाम् | (कुमारस्वामी) |
| १६१ | क्रमालंकारोऽयम् | (केचित्) |
| १३० | क्रव्यादकौशिककपोतककाककङ्कैः | (वराहमिहिरकृतबृहत्संहिता ४२-६२) |
| १३० | क्रव्यादा गृध्राद्यः | (उत्पलपरिमलकारः) |
| २९४ | क्रियादिभिन्नं यत् कार्यं | (शालिकानाथः) |
| २०४ | क्रीडतां मृन्मयैर्यद्वत् | (दशरूपकम् ४-४१) |
| ११०,१२०,१८१ | क्रीडोऽनुसंपरिभ्यश्च | (अष्टाध्यायी १-३.२१) |
| २२३ | क्रुधद्रुह— | ( ,, १-४-३७) |
| १६४ | क्रोधः कोपश्च रोषश्च | (भावप्रकाशनं २-अधि. पृ. ३५) |
| २८३ | क्वचिच्छ्लेषेण धर्मांश- | (वि. चक्रवर्त्ती ४३ श्लोकः) |
| ६५ | क्वचित् केनचित् | (काव्यप्रकाशः ५ उल्लासः) |
| २२१ | क्वचिदवसानेऽपि | (वृत्तरत्नाकरः) |
| २२७ | क्लिशः क्त्वानिष्ठयोः | (अष्टाध्यायी ७-२-५०) |
| १०१ | क्षिप प्रेरणे | (धातुपाठे दिवादिः) |
| १०१ | क्षिपेर्वेल्लः | (प्राकृतसूत्रम्) |
| १६५ | क्षुब्धस्वान्त- | (अष्टाध्यायी ७-२-१८) |
| १४० | क्षेमङ्करोऽरिष्टतातिः | (नामलिङ्गानुशासनम्) |
| १०९, २३७ | क्षेमप्रियमद्रेऽण् च | (अष्टाध्यायी ३-२-४४) |
| १६६ | क्षोभात्मा रुधिरान्त्रादि- | (भावप्रकाशनं ३-अधि. पृ. ६३) |
| १२० | क्ष्वेडा तु सिंहनादः स्यात् | (नामलिङ्गानुशासनम्) |
| ४५ | खण्डिकादिभ्यश्च | (अष्टाध्यायी ४-२-४५) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २८ | तत्कालीनो विशेषस्तु | |
| १०२ | तत्तत्प्रहरकयोग्यैः | (भावप्रकाशनं अधि. १०. पृ. २९४) |
| ७६ | तत्तन्नेतृमनोवृत्तिवशात् | (भावप्रकाशनं ,, ७. पृ. २०८) |
| ३१२ | तत्पादनखरत्नानां | (विक्रमाङ्कदेवचरितं ८-९) |
| १९१ | तत्पुरुषे कृति बहुलम् | (अष्टाध्यायी ६-३-१४) |
| ३३१ | तत्र काकागमनं देवदत्तागमनस्य | (कैयटः ५-३-१०६) |
| ११६ | तत्र नियुक्तः | (अष्टाध्यायी ४-४-६९) |
| २५८ | तत्र तस्येव | (अष्टाध्यायी ५-१-११६) |
| २५१ | तत्र साधुः | (अष्टाध्यायी ४-४-९७) |
| ११४, २९७ | तत्सर्वादेः— | (अष्टाध्यायी ५-२-७) |
| ३३० | तत्सिद्धिहेतावेकस्मिन् | (    ) |
| ३० | तदल्पमपि नोपेक्ष्यम् | (काव्यादर्शः १-७) |
| ४८ | तदशिष्यं संज्ञाप्रमाणत्वात् | (अष्टाध्यायी १-२-५३) |
| ३१५ | तदाद्यास्तिथयोर्द्वयोः | (नामलिङ्गानुशासनम्) |
| ३३६ | तदिदमरण्यं यस्मिन् | (रुद्रटीयः काव्यालंकारः ७-१०४) |
| १०६ | तदुत्सार्यमाणमपि | (उद्भिदधिकरणे कुमारिलः) |
| २२८ | तदेवमितरेतराश्रयदोषः | (वामनालंकारः ४-२-१६) |
| २९२ | तदेवं श्लिष्टविशेषण . . . | (अलंकारसर्वस्वम् समासोक्तिप्रकरणम्) |
| २, १०, २७९ | तद्धितार्थ . . . | (अष्टाध्यायी २-१-५१) |
| ४८, १७७ | तद् यत्नगौरवं सम्पद्येत (प्रसज्येत) | (शबरस्वामी १-१-१) |
| २६० | तद्वाचकस्य क्विपः | (काव्यप्रकाशः १० उल्लासः) |
| २४९ | तनुवपुः | (काव्यप्रकाशे ९ उल्लासे उद्धृतः श्लोकः) |
| २१ | तमिव पश्यन्ति जनाः | (महाभाष्यम् ३-२-६०) |
| ८० | तर्जनीमूलसंलग्न . . . | (संगीतरत्नाकरः) |
| २६५ | तसौ मत्वर्थे | (अष्टाध्यायी १-४-१९) |
| ४० | तस्मात् पदैरभिहितः | (भाट्टाः) |
| ५६, १४७ | तस्मिन्नणि च | (अष्टाध्यायी ४-३-२) |
| १५४ | तस्याविभक्तिकत्वात्(सर्वानन्दः, अमरव्याख्या. ३-१-६१ दशटीकासर्वस्वम्) | |
| २५८ | तस्येव | (अष्टाध्यायी ५-१-११६) |
| २९३ | तस्येश्वरः | (अष्टाध्यायी ५-१-४२) |
| १९३ | तात्कालिको विकारः स्यात् | (प्रतापरुद्रीयम् पृ. १८८) |
| ३२ | तात्पर्यं नाम | (एकावल्यां द्वितीये तरले द्रष्टव्यम्) |
| ३२ | तात्पर्यार्थोऽपि केषुचित् | (काव्यप्रकाशः २-१) |
| २१ | तादृशा[गा]दयः | (काशिकावृत्तिः ३-२-६०) |
| १५५ | तादृशे नटे | (शङ्कुकः) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| ३३५ | तारापुटभ्रूदृष्ट्यादेः | (वि. चक्रवर्ती.भरतसंग्रहः अ. स.·सं. सूक्ष्मालंकारः) |
| ७२ | तालान्तरालवर्ती यः | |
| ५४ | तासु चावनतेः स्त्रियः | (नामलिङ्गानुशासनम् ) |
| ५१ | तुमुन्तव्यक्त्वासु | (प्राकृतप्रकाशे ७-१४) |
| १६२ | तुल्योऽनेकत्र दक्षिणः | (प्रतापरुद्रीयम् पृ. १७) |
| १२८ | तृतीयाप्रभृतीनि | (अष्टाध्यायी २-२-२१) |
| १६७ | तृष्णाक्षयसुखस्य यः | (ध्वन्याचार्यः तृतीयोद्द्योते) |
| १६७ | तृष्णानां विषयाभिलाषाणां . . . | (लोचनम् ३ उ. शान्तरसप्रकरणम् ) |
| २५८ | तेन तुल्यं | (अष्टाध्यायी ५-१-११५) |
| १२ | तेन वित्तः— | (अष्टाध्यायी ५-२-२६) |
| ७६ | तेनात्रिवर्गफले प्रहसनादौ | (दशरूपावलोकः १-२४) |
| १०० | तेमयावेकवचनस्य | (अष्टाध्यायी ८-१-२२) |
| ११८ | तोमरोऽस्त्री लोहहुलदण्डे | (वैजयन्ती) |
| २० | त्यदादिषु— | (अष्टाध्यायी ३-२-६०) |
| ८० | त्रिपताककरेणान्यान् | (भावप्रकाशनं ७-अधि. पृ. २१९) |
| ८० | त्रिपताकः पताकश्च | |
| ३०० | त्रिवर्गो धर्मकामार्थाः | (नामलिङ्गानुशासनम् ) |
| ८७ | त्रेधाऽत्र नायिका ज्ञेया | |
| २ | त्र्यवयवा विद्या त्रिविद्या | (महाभाष्यम् ४-१-८८) |
| ५९ | त्वोदवापोताः | (प्राकृतसूत्रम् षड्भाषाचन्द्रिका २-१-६७) |
| १५० | दक्षस्यारामभूमित्वात् | (स्कान्दे भीमेश्वरखण्डः) |
| १२१ | दक्षिणाक्ष्णः परिस्पन्दात् | (मानसोल्लासः २-२०-१-१५८) |
| ११९, १३० | दक्षिणापश्चात्— | (अष्टाध्यायी ४-२-९८) |
| ३२६ | दण्डापूपिकया— | (अलंकारसर्वस्वसूत्रम् अर्थापत्तिप्रकरणम् ) |
| ७५ | दध्नेन्द्रियकामस्य | (तै. ब्राह्मणं २-१-५-६) |
| २९२ | दन्तप्रभापुष्पचिता | (काव्यालंकारसारसंग्रहः २-२२) |
| २५६ | दश दाडिमानि | (महाभाष्यम् १-१-१) |
| १९३ | दशधा मन्मथावस्था | (भावप्रकाशनं ४-अधिकारः) |
| ३४० | दाण्डिनायन— | (अष्टाध्यायी ६-४-१७४) |
| १५२ | दातव्यमिति यद् दानं | (व्यासः ; गीता १७-२०) |
| ९२ | दाता महीभृतां नाथः | (श्रीकण्ठलीला) |
| १६५, १६८ | दानवीरं युद्धवीरं | ([भरत]मुनिः) |
| २ | दाराः पुंसि स भूम्न्येव | (नामलिङ्गानुशासनम् ) |
| २१२ | दारेष्वपि गृहाः— | (नामलिङ्गानुशासनम् ) |
| ९१ | दिव्यस्त्रियमनिच्छन्तीम् | (दशरूपकम् ३-७४) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| ४२ | निष्ठ्यूतोद्गीर्णवान्तादि . . . . | (काव्यादर्शः १-९५) |
| २११ | निहतार्थम् | (केचित्) |
| २५ | नीरन्ध्रा तत्र कर्तव्या | (संगीतचूडामणिः) |
| ८० | नीरसोऽनुचितस्तत्र | (दशरूपकम् १-५७) |
| ३९ | नीराजयन्त्यन्ध्रपुरीरमण्यः (प्रतापरुद्रीयम् नाटके-१५ श्लो, अर्थालङ्कारः, ५) | |
| २३ | नैव करेणुस्थाभिसरणं | (आभाणकः) |
| ३०१ | न्तमाणौ शतृशानचोः | (प्राकृतसूत्रम् ६-१०) |
| १५४ | पञ्चमी | (अष्टाध्यायी २-३-२८) |
| १७७ | पटस्य शुक्लः | (महाभाष्यम् ५-२-९४) |
| १८८ | पट्टसो लोहदण्डो यः | (वैजयन्ती) |
| १९ | पताकानायकः | (दशरूपकम् २-८) |
| ५१ | पदयोः सन्धिर्वा | (प्राकृतसूत्रम् षड्भाषाचन्द्रिका १-१-१९) |
| १२४, २१९ | पद्यमङ्गुलिविच्छेदः | |
| २८ | पद्ये यशसि च श्लोकः | (नामलिङ्गानुशासनम्) |
| ३३२ | पन्थो ण नित्यम् | (अष्टाध्यायी ५-१-७६) |
| १४७ | पयःपानं भुजङ्गानां | (नीतिशास्त्रम्) |
| १५४ | परश्शताद्यास्ते . . . | (नामलिङ्गानुशासनम्) |
| १९९ | परस्परमाङ्गोल्लंघनम् | (रसकलिका पृ. ३५) (रसमञ्जरी) |
| १५८ | परस्य सुखदुःखादेः | (भावप्रकाशनम् पृ. १४) |
| ३१ | परिणतिविरसं पनसफलम् | (दृश्यतां न्यायकुसुमाञ्जलिः ५-६) |
| २१८ | पाघ्राध्मा . . . . | (अष्टाध्यायी ७-३-७८) |
| २०६ | पाठ्यादथ ध्रुवागानात् | (व्यक्तिविवेकः १ विमर्शः) |
| १२ | पाणिनेर्जैमिनेश्चैव | |
| २२७ | पातालमिव नाभिस्ते | (काव्यालंकारसूत्रवृत्तिः ४-२-११) |
| ५१ | पादाम्बुजं भवतु वः | (पञ्चस्तव्यां घटस्तवः १ श्लोकः) |
| १२९, २२७ | पारेमध्ये षष्ठ्या वा | (अष्टाध्यायी २-१-१८) |
| २७२ | पाशादिभ्यो यः | (अष्टाध्यायी ४-२-४१) |
| ९३ | पिता मात्रा | (अष्टाध्यायी १-२-७०) |
| १३५ | पुत्रेऽन्यतरस्याम् | (अष्टाध्यायी ६ ३-२२) |
| २४९ | पुनरुक्तवदाभासः | (काव्यप्रकाशः नवमोल्लासः) |
| ९२ | पुमान् स्त्रिया | (अष्टाध्यायी १-२-६७) |
| १६१ | पुंसोऽप्यनेकनायिकानुरागे रसाभासत्वम् | (केचित्) |
| ४७, १७७ | पूरणगुण . . . . . | (अष्टाध्यायी २-२-११) |
| ४७ | पूरणगुणेत्यादिना | (पदमञ्जरी २-२-११) |
| १२१ | पूर्णकुम्भे तथाऽऽदर्शे | (मानसोल्लासः २-१३-८१८, ८१९, ८२०) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २५१ | बध्यते षडरं चक्रम् | |
| १०६ | बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् | (अष्टाध्यायी ५-४-११३) |
| ३३४ | बाहू राजन्यः कृतः | (पुरुषसूक्तम् ३ मन्त्रः) |
| १५८ | बाह्यास्तु स्तम्भादयः | (हेमचन्द्रस्य काव्यानुशासनम्-२-५३) |
| २१२ | बृन्दारका दैवतानि | (नामलिङ्गानुशासनम्) |
| १२० | बृहि शब्दे | (भ्वादिः. अक. सेट्) |
| ३१२ | बोधयन् इति । कारीषोऽग्निः .. | (वि. चक्रवर्त्ती ; निदर्शनालंकारप्रकरणम्) |
| २३ | भगिनी स्यालिका वाऽपि | (सर्वज्ञसोमेश्वरः (?)) |
| ११२ | भञ्जभासमिदः— | (अष्टाध्यायी ३-२-१६१) |
| ११७ | भद्रः श्रीहरितालगुग्गुलु- | (गजशास्त्रम्) |
| १६० | भागद्वयं प्रविष्टस्य | (भावप्रकाशनम् अधि-६ पृ. १३३) |
| २४९ | भाति सदानत्यागः | (रुद्रटः ?) |
| १८१ | भाम क्रोधे | (धातुपाठः-चुरादिः-भ्वादिश्च आत्म.) |
| ८३ | भारती संस्कृतप्रायो | (अलंकारसंग्रहः अष्टमप्रकरणम् ८-२) |
| ९९ | भार्या जायाऽथ पुंभूम्नि | (नामलिङ्गानुशासनम्) |
| १५९ | भावान्तरनैरपेक्ष्येण | (केचित्) |
| १८९ | भुक्ते तु भुङ्क्ते या पत्यौ | (सर्वज्ञसोमेश्वरः (?)) |
| १३१ | भुवो भावे | (अष्टाध्यायी ३-१-१०७) |
| ११८ | भुसुण्ढी स्यात् दारुमयी | (वैजयन्ती) |
| १०२ | भूमिकाभिरनेकाभिः | (भावप्रकाशनम्-१०-अधि. पृ. २८८) |
| २ | भूयिष्ठां मे नमउक्तिं विधेम | (ईशावास्योपनिषत्-१८) |
| २३८ | भूवादयो धातवः | (अष्टाध्यायी १-३-१) |
| २३८ | भू सत्तायाम् | (भ्वादिः- अक. सेट्) |
| ३८ | भ्रमिमरतिमलसहृदयतां | (ध्वन्यालोकः २-उद्द्योतः) |
| १५८ | भ्रूविक्षेपकटाक्षादिविकारो | (भावप्रकाशनम् १-अधि. पृ. १३) |
| ६७ | मइममहमज्झ- | (प्राकृतसूत्रम् षड्भाषाचन्द्रिका २-३-२४) |
| २ | मङ्गलादीनि मङ्गलमध्यानि | (महाभाष्यम् पस्पशाह्निकम्) |
| १५९, २०९ | मजन्तश्च (उन्मज्जन्तः) निमजन्तः | (भावप्रकाशनम् १ अधि. पृ २५-६) |
| १२, ११० | मतिबुद्धिपूजार्थेभ्यश्च | (अष्टाध्यायी ३-२ १८८) |
| १८१ | मनसो यद् द्रवीभावो | (भावप्रकाशनम् ४-अधि पृ. ८०) |
| १५८ | मनोमयवती रत्यादिगणः | (केचित्) |
| ३५ | मन्थानं मन्थरं कृत्वा | (विष्णुपुराणम् १-९-७७) |
| २७७ | मन्ये शङ्के ध्रुवं | (काव्यादर्शः २-२३४) |
| १८५ | मरणेऽभिनयो नास्ति | (भावप्रकाशनम् १-अधि. पृ. २४) |
| ९ | महाकुलादञ्खञौ | (अष्टाध्यायी ४-२-२४२) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २३५ | योगविभागाङ्गीकारे | (द्रष्टव्या पदमञ्जरी ६-३-८४) |
| ९३ | रङ्गं प्रसाद्य | (दशरूपकम् ३-४) |
| ११७ | रणः क्वणः | (नामलिङ्गानुशासनम्) |
| १५५ | रसतेः स्वादनार्थत्वात् | |
| ३३७ | रसभावतदाभास- | (ध्वन्यालोकः २-२५) |
| ५२ | रसभावादिविषय- | (काव्यालोकः (ध्वन्यालोकः) ३ उ.) |
| १६१ | रसस्तु स एव, यत्र मुख्यतया | (लोचनम् २ उ.) |
| ३३ | रसस्य स्याद् विरोधाय | (ध्व. आ. ३ उद्द्योतः) |
| ३३ | रसाद्यनुगुणत्वेन | (ध्वन्यालोकः ३-८९) |
| ८२ | रसानामङ्गभूतानां | (भावप्रकाशनम् ८ अधि. पृ. २३५) |
| २०२ | रसाः कार्यवशात् सर्वे | (भावप्रकाशनम् ६ अधि. पृ. १३४) |
| १९९ | रागोऽनुवृत्तोऽविच्छिन्नः | (भावप्रकाशनम् ४ अधि. पृ. ८२) |
| १०४ | राजन्यो मनुष्याणाम् | (तै. संहिता ७-१-५) |
| १३७, १३४ | राजन्वान् सौराज्ये | (अष्टाध्यायी ८-२-१४) |
| २४६ | राजश्वशुराद् यत् | (अष्टाध्यायी ४-१-१३७) |
| १४१ | राजा कालस्य कारणम् | (महाभारतम्) |
| १२३ | राज्ञः पुरजनस्यापि | (भावप्रकाशनम् १० अधिकारः पृ. २९४) |
| १४३ | राज्ञां नवाङ्गुलायामः | |
| १६८ | राज्यधुरोद्वहनादयोऽपि | (लोचनम् ३ उ. शान्तरसप्रकरणम्) |
| २५० | राज्योपकरणेषु लक्ष्मीरस्ति | (आगमः) |
| १५८ | रामाद्याश्रित(श्रय)दुःखादेः | (भावप्रकाशनं १ अधि. पृ. १३) |
| २४१ | रीतिरात्मा काव्यस्य | (वामनः १. १) |
| १४७ | रुचिरेण सुवर्णेन | (मानसोल्लासः) |
| ३४ | रूढिर्योगमपहरति | |
| ३८ | रूपकं पूर्वसंसिद्धम् | (अलंकारसर्वस्वव्याख्या सञ्जीवनी १२ श्लोकः) |
| ९७ | रूपयौवनशालिन्यः | (शार्ङ्गदेवः सं. र. ३-२४) |
| २५१ | रेखाभ्यां चतुरश्राणि | (नागबन्धोद्धारः) |
| ३७ | लक्षणा तु समन्वयशक्ति- | (ध्व. आ. लोचनम् १-४) |
| १२९ | लग्नमर्धं तृतीयांशः | (ज्योतिःशास्त्रम्) |
| २३८ | लः कर्मणि च भावे चाकर्मकेभ्यः | (अष्टाध्यायी ३-४-६९) |
| २४९ | लाटजनोपलालितोऽनुप्रासः | (काव्यप्रकाशव्याख्याने नवमोल्लासे भट्टगोपालः) |
| ९७ | लास्यं तु सुकुमाराङ्गम् | (सं. रत्नाकरः ७-३०) |
| ५४ | लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य | (महाभाष्यम् २-४-१२) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २१७ | लोकवेदयोः | (महाभाष्यम् ६-३-२६) |
| २२ | वक्ति सोल्लासवक्रोक्त्या | (साहित्यदर्पणः ३-१६ द्रष्टव्यः) |
| ३३६ | वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैः | (काव्यप्रकाशे १० उल्लासे उद्धृतः) |
| ६८ | वक्त्रं नाद्यान्नसौ स्याताम् | (वृत्तरत्नाकरः) |
| २२६ | वक्त्रं व्यादाय स्वपिति | (महाभाष्यम् ३-४-२१) |
| १२४ | वक्षोऽथ कक्षौ नखनासिकाऽऽस्यम् | (वराहमिहिरकृतबृहत्संहिता ६७-८६, ८८) |
| १५५ | वक्ष्यमाणप्रकारेण | (अभिनवगुप्तादयः-अनुवादः) |
| १४० | वन्ध्यभूभृद्गुणोत्कर्ष- | (कोशः) |
| १९८ | वर्तमानसामीप्ये वर्तमानवद्वा | (अष्टाध्यायी ३-३-१३१) |
| ११७ | वशिरण्योरुपसंख्यानम् | (वा. ३-३-५४) |
| ४५, २७९, ३२२, ३४३ | वष्टि भागुरिरल्लोपम् | (पदमञ्जरी ६-२-३७) |
| ७९ | वस्तुनेतृरसादीनां | (भावप्रकाशनम् ७ अधि. पृ. २०८) |
| ७२ | वस्तु यत् स्यात् प्रबन्धस्य | (भावप्रकाशनम् ७ अधि. पृ. २००) |
| ९० | वस्तुस्वभावकपटः | (भावप्रकाशनं ८ अधि. पृ. २४९) |
| १७२ | वाक्कायमनसां प्रायः | (भावप्रकाशनम् २ अधि. पृ. ३३) |
| ६६ | वा क्यषः | (अष्टाध्यायी १-३-९०) |
| १६, १६४ | वाक्यादेरामन्त्रितस्य | (अष्टाध्यायी ८-१-८) |
| २५ | वागङ्गसत्त्वाभिनयैः | (भावप्रकाशनम् २ अधि. पृ. ३८) |
| २०० | वाचा शरीरस्पर्शनमुपलम्भः | (काशिकावृत्तिः १-३-२१) |
| ४० | वाच्यसामर्थ्याक्षिप्तः | (ध्व. आ. लोचनम् १-४, ५) |
| ६१ | वा सख्या मामि- | (प्राकृतसूत्रम् षड्भाषाचन्द्रिका २-१-५८) |
| ५१ | वा समासे | (प्राकृतसूत्रम् ३-५५) |
| ११ | वासोऽङ्गरागाभरण- | (भावप्रकाशनम् ५ अधि. पृ. ११२) |
| २६५ | वा स्याद् विकल्पोपमयोः | (विश्वः) |
| २२१, २९८ | वाऽऽहिताग्न्यादिषु | (अष्टाध्यायी २-२-३७) |
| ६५ | वाहिन्यः काकतीन्द्रस्य | (प्रतापरुद्रीयम् पृ. ३५) |
| १९५ | विअवेअ अवधारणे | (प्राकृतसूत्रम् ८-३) |
| २३४ | विकटत्वं च बन्धस्य | (वामनः ३-१-२५) |
| १६६ | विकृतस्वरसत्त्वादेः | (दशरूपकम् ४-८०) |
| १६३ | विकृताकृतिवाग्वेषैः | (दशरूपकम् ४-७५) |
| २७० | विघटनं सम्बन्धिभेदात् | (अलंकारसर्वस्वम् सहोक्तिप्रकरणम् ) |
| ५३ | विच्छित्तिशोभिनैकेन | (ध्वन्यालोकः ३-१/२) |
| २२५ | विजयेतां रामलक्ष्मणौ | (अनर्घराघवम् ६-१८/१९) |
| २४६ | विदग्धाः | (सर्वस्वकारादयः) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| ३८ | विद्वन्मानसहंस | (काव्यप्रकाशे दशमे रूपकप्रकरणे उदाहृतम्) |
| ३२६ | विधिरत्यन्तप्राप्ते | (तन्त्रवार्त्तिकम्) |
| २०८ | विभावादिरत्र न ज्ञापकः | (लोचनम् १ उ. अन्ते ; अनुवादः) |
| २०० | विभावादिसम्भवो हि | (एकावली) |
| १५७ | विभावैरनुभावैश्च | (दशरूपकम् ४-१) |
| १६० | विभावोऽप्यनुभावः स्यात् | (भावप्रकाशनम् १ अधि. पृ. २७) |
| ४३ | विभाषा कथमि | (अष्टाध्यायी ३-३-१४३) |
| २५७ | विभाषा सुपः | (अष्टाध्यायी ५-४-६८) |
| १५६ | विरुद्धैरविरुद्धैर्वा | (दशरूपकम् ४-३४) |
| २०२ | विवक्षिते रसे लब्धप्रतिष्ठे | (ध्वन्यालोकः ३-७६) |
| ३१८ | विशेषनिषेधे शेषाभ्यनुज्ञानम् | (न्यायः) |
| ४० | विशेषरूपं वाक्यार्थम् | (कुमारिलः) |
| १५९ | विशेषादाभिमुख्येन | (भावप्रकाशनम् १ अधि. पृ. २५) |
| २७६ | विषयनिगरणेन अभेद- | (अलंकारसर्वस्वम् उत्प्रेक्षाप्रकरणम्) |
| २७३ | विषय्याकारमारोप्य | (वि. चक्रवर्त्ती २२ श्लोकः) |
| २१ | विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये | (अष्टाध्यायी ६-३-९२) |
| ४६ | विस्रम्भे परमां काष्ठाम् | (रसार्णवसुधाकरः २-११२) |
| २४८ | विहगाः कदम्बसुरभाविह गाः | (शिशुपालवधः ४-३६) |
| २१ | विंशत्याद्याः सदैकत्वे | (नामलिङ्गानुशासनम्) |
| १६१ | वीरस्य चैव यत् कर्म | ([भरत]मुनिः ६-४१) |
| १६५ | वीररौद्रप्रधानः | (लोचनम् ३ उ. संघटनाग्रन्थः) |
| १२४ | वृत्तजङ्घो भवेद् भूपः | (सामुद्रिकशास्त्रम्) |
| ४० | वृत्तवर्तिष्यमाणानां | (दशरूपकम् १-५९) |
| ८ | वृद्धाच्छः | (अष्टाध्यायी ४-२-११४) |
| १२ | वृद्धेत्- | (अष्टाध्यायी ४-१-१७१) |
| ११ | वृद्धो यूना | (अष्टाध्यायी १-२-६५) |
| १६६ | वैराग्यात् युवतिगर्हासिद्धः | (दशरूपावलोकः ४-६७) |
| २३५ | वोपसर्जनस्य | (अष्टाध्यायी ६-३-८२) |
| ८५ | व्यक्तीकृत्य कमप्यर्थम् | (विदग्धमुखमण्डनम् ४.१) |
| ३८ | व्यङ्ग्यभाविनोः | (काव्यप्रकाशः ५-उल्लासः) |
| १५५ | व्यञ्जनौषधिसंयोगः | (भावप्रकाशनम् २-अधि. पृ. ३६) |
| ११३ | व्यत्यस्तपाणिना कार्यम् | (मनुस्मृतिः २-७२) |
| २३० | व्यभिचारिरसस्थायि- | (काव्यप्रकाशः ७-६०) |
| २६२ | व्याघ्रशब्दो यदा शौर्यात् | (वाक्यपदीयम् ३-१४-४३०) |

| पुटम् | वचनानि | आकरः |
|---|---|---|
| २९० | सदसत्त्वनिवृत्तिश्चेत् | (वि. चक्रवर्ती ५३ श्लोकः) |
| २३० | सदा स्नात्वा निशीथिन्यां | (काव्यप्रकाशः ७-उल्लासः) |
| २६७ | सद्दशादृष्टचिन्ताद्याः | |
| ८८ | सद्रूपोद्भावना माया | (भावप्रकाशनम् २-अधि. पृ. २९) |
| १७८ | सन्तोषो धृतिः | (अन्ये ; हेमचन्द्रः २-२०) |
| २३९ | सन्धिर्ना विग्रहो यानं | (नामलिङ्गानुशासनम्) |
| १९६, १९९ | सपत्नीनखदन्तादिचिह्नं | (भावप्रकाशनम् ५ अधि. पृ. १०८) |
| २३५ | सपीतिः स्त्री तुल्यपानम् | (नामलिङ्गानुशासनम्) |
| १९, ९७, १९६ | सप्तमी शौण्डैः | (अष्टाध्यायी २-१-४०) |
| २६४ | सप्तम्युपमानपूर्वपदस्य | (वार्त्तिकम् २-२-२४) |
| १९९ | स प्रेमा यन्मिथो यूनोः | (रसार्णवसुधाकरः २-११०) |
| २५० | सभाया यः | (अष्टाध्यायी ४-४-१०५) |
| १२२ | समवप्रविभ्यः स्थः | (अष्टाध्यायी १-३-२२) |
| २०३ | समवायान् समवैति | (अष्टाध्यायी ४-४-४३) |
| ११२, २३७ | समस्तृतीयायुक्तात् | (अष्टाध्यायी १-३-५४) |
| २२६ | समानकर्तृकयोः | (अष्टाध्यायी ३-४-२१) |
| ६०, १०० | समानवाक्ये | (वार्त्तिकम् २-१-१) |
| २३५ | समानस्य इति योगविभागः | (द्रष्टव्या काशिकावृत्तिः ६-३-८४) |
| २३५ | समानस्य च्छन्दसि | (अष्टाध्यायी ६-३-८४) |
| २६४ | समासगेवादिलोपे | (संग्रहः-कुमारस्वामी) |
| ३३१ | समासाच्च तद्विषयात् | (अष्टाध्यायी ५-३-१०६) |
| २३१ | समूलाकृतजीवेषु | (अष्टाध्यायी ३-४-३६) |
| २२० | समोऽकूजने | (वार्त्तिकम् १-३-२१) |
| ६३, १३६, १५१, २१६ | समो गम्यृच्छि- | (अष्टाध्यायी १-३-२९) |
| ११० | सरितः पुलिनं वेला | (भावप्रकाशनम् ४ अधि. पृ. ८२) |
| १६ | सर्वः प्लुतः साहसं | (महाभाष्यम् ८-२-९२) |
| २३६, २७१ | सर्वकूलाभ्रकरीषेषु | (अष्टाध्यायी ३-२-४२) |
| १६५ | सर्वत्र कृतकमेव | (सिंहभूपालः, र. अ. सु. २-१४५) |
| २१० | सर्वत्रैकैवानन्दव्यक्तिः | (नरहरिसूरिः) |
| ९,११७,२६९ | सर्वप्रकारैः संपूर्णकामः | (भावप्रकाशनम् ६-अधि पृ. १३५) |
| १,११७,२६० | सर्वप्रातिपदिकेभ्यः- | (वार्त्तिकम् ३-१-११) |
| ६४ | सर्वमभ्यर्हितं द्रव्यं | (तन्त्रवार्त्तिकम् ३-४-१०) |
| ८० | सर्वश्राव्यं प्रकाशं स्यात् | (दशरूपकम् १-६४) |
| १५२ | सर्वाण्युदकपूर्वाणि दानानि | (आपस्तम्बधर्मसूत्रम् २-४-९-८) |

——o——

## रत्नापणसहितस्य प्रतापरुद्रीयस्य शुद्धिपट्टिका

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 9 | 13 | कि वा वक्तव्यब्: | किब् वा वक्तव्य: |
| 11 | 21 | आ यामि० | आभ्यामि० |
| 14 | 21 | तारो . . . | तारो हरिः |
| 20 | 14 | ०तोन्मनाः । | ०तोन्मनाः ॥ ५२ ॥ |
| 31 | Top title | नायकप्रकरणम् | काव्यप्रकरणम् |
| 36 | 19 | प्रतिप्रतिपत्तिः | प्रतिपत्तिः |
| 47 | Top title | नायकप्रकरणम् | काव्यप्रकरणम् |
| ,, | 18 | खड्गोरगस्यद्विर्ष | खड्गोरगस्य द्विष० |
| 55 | 17 | ध्वमिः | ध्वनिः |
| 56 | 6 from below | इत्या-**सर्वदन्येति** । | इत्याह-**सर्वदैन्येति** । |
| 59 | Top title | नायकप्रकरणम् | काव्यप्रकरणम् |
| 95 | ,, | प्रकरणम् : | प्रकरणम् |
| 99 | 7 from below | स्तस्मि | स्तस्मिन् |
| 101 | 2 | विलसत्ससर्वं | विलसत्सर्व० |
| ,, | 4 | विलत्सर्व | ,, |
| 114 | 7 from below | आदिपुराणे | आदित्यपुराणे |
| 117 | 15 | भद्र श्री | भद्रः श्री |
| 122 | 13 | ०पत्र | ०पत्रः |
| 125 | last | अगारकैदेशे | अगारैकदेशे |
| 129 | 2 from below | ०संदितायाम् | ०संहितायाम् |
| 141 | 20 | कृतयुगं | कृतयुगः |
| 154 | 1 | भूदेवतान | भूदेवतानां |
| 166 | 19 | प्रहारै० | प्रचारै० |
| 176 | last line | भावाः . . ०नस्त- | *Delete* the whole line |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 193 | 8 from below | मननो० | मदनो० |
| 198 | 7 from below | व्यङ्गहर्षादि० | व्यङ्ग्यहर्षादि० |
| 207 | 18 | इवि | इति |
| 212 | 11 | प्रसिद्ध | प्रसिद्धं |
| 226 | 7 from below | जीवन्त्यिस्मा० | जीवन्त्वित्यस्मा० |
| 230 | 5 ,, | ०परीण० | ०पारीण० |
| 236 | 4 | यद्विधीयते ॥ २१ ॥ | यद्विधीयते ॥ २२ ॥ |
| 240 | 2 | चरिअत्स । | चरिअस्स । |
| ,, | 10 | भवतो | भावतो |
| 246 | 9 | शब्दस्यार्थं प्र० | शब्दस्यार्थप्र० |
| 264 | 15 | गम्यमार्थ० | गम्यमानार्थ० |
| 279 | 7 | | *Add* after १२ उपान्तक्रियानिमित्त-जातिभावफलोत्प्रेक्षा । १३ । |
| 280 | 13 | ०गुणानिमित्त० | ०गुणनिमित्त० |
| 283 | 6 from below | भणन्ते | भजन्ते |
| ,, | 4 ,, | क्वचिच्छ्लेषेनैवेषा | क्वचिच्छ्लेषेण धर्मांशगतेनैषा |
| 293 | 11 | समाङ्गेति | सप्ताङ्गेति |
| 294 | 15 | धवलिम | धवलिमा |
| ,, | 20 | विषयेन | विषये न |
| ,, | ,, | स्वेदादीगां | स्वेदादीनां |
| 302 | 11 | विलसद् | विगलद् |
| ,, | 18 | अप्र | अत्र |
| 303 | 13 | ०सीमाम० | ०सीमान० |
| ,, | 18 | ०वृन्त्येक० | ०वृन्तेक० |
| 307 | 21 | ०निलय: | ०निलया |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 309 | 2 from below | ०उपत्ति० | ०उत्पत्ति० |
| 326 | 1 | यत्रैक | यत्रैकं |
| ,, | 2 | तयोर्द्व्र्जयोर्वनीयस्य | तयोर्द्वयोर्वर्जनीयस्य |
| ,, | 8 | वसुमत्या | वसुमत्याः |
| 327 | last two lines | च्छेदं . . . तत्र च | *Omit* the two lines on p. 327; *Read* them as ll. 21, 22 on p. 328 |
| 331 | 21 | ०बिम्बितत्वे नास्तीति | ०बिम्बितत्वेनास्तीति |
| 335 | 2 from below | आकार: | आकाराः |
| 349 | 3 ,, | अहो विश्वातिशायिनी | *Omit* the line |
| 351 | 14 | बिभ्रन्तु | बिभ्रतु |
| 362 | 12 | धीरोऽयं युवराज० 16 | To be omitted |
| 374 | 26 | ४-४-१३० | अष्टाध्यायी ४-४-१३० |

## INTRODUCTION-CORRECTIONS

| Page | Line | Read |
| --- | --- | --- |
| 23 | 7 | features |
| 25 | 11 | and |
| 26 | 8 | ०रूढेन |
| ,, | 5 from below | संपूर्णः |
| 31 | 11 | Vṛtti |
| ,, | 25 | Śṛṅgāra |
| 33 | 6 | Singa- |
| 34 | 7 | at some |

## THE SAMSKRIT EDUCATION SOCIETY (Regd.)

(Regd. Office) 16, East Mada St., Mylapore, Madras-600 004
(Telephone 71676)

### *THE SOCIETY'S PUBLICATIONS*

| | Price Rs. |
|---|---|
| 1. THE TEACHING OF SANSKRIT (in English) by Prof. **K. Rama Varma Raja**, M.A., Ph. D., Retd. Principal, S. N. Training College, Moottakunnam, Kerala. (Royal Octovo.) Pp. xiv+133 | 5-00 |
| 2. THE KRDANTARUPAMALA - a complete concordance of verbal derlvatives of 2039 roots in Sanskrit arranged in alphabetical order by **Sastra Ratnakara Kulapati, Pandit Ramasubba Sastrigal,** first head of the Samskrit Education Society Teaching Centre and his pupils **Pt. Srivatsankacharya & Pt. T. K. Pranatharthiharan,** Professors, Samskrit Education Society in five Volumes (Royal Octovo) Pp. lvi+1425 | 100-00 per set |
| 3. THE NEW MODEL SANSKRIT GRAMMAR-by Sri **D. Krishna Iyengar,** in 2 Volumes (Royal Octovo) Pp. xiv+486 | 20-00 per set. |
| 4. THE SABDATARANGINI by **Panditaraja Sastra Ratnakara V. Subrahmanya Sastrigal,** Director of Studies, Samskrit Eduction Society, (Demmy Octovo) Pp. xi+216 (Received the Sahitya Academy Award for Sanskrit 1971.) | 6-00 |
| 5. THE AVYAYA KOSA a complete alphabetical Concordance of Indeclinables in Samskrit with their meaning and illustrations. Compiled by **Pandit Sri Srivatsankacharya,** Teacher, Samskrit Education Society. (Demy Octovo). Pp. x+395 | 12-00 |
| 6. PRATAPARUDRIYA of Vidyanatha. Standard Alamkara work of C 1300 A.D. Edited with a Critical Introduction (in English) by **Dr. V. Raghavan,** Second revised enlarged edition (Royal Octovo) Pp. xix+35+399 | 25-00 |
| 7. SANSKRIT ESSAYS (in English) on the Value of the Language and the Literature By **Dr. V. Raghavan** (Demy Octovo) Pp. x+180 — Ordinary edition | 6-00 |
| Library ,, | 10-00 |

8. NILAKANTHA VIJAYA CHAMPŪ of Nilakantha Dikshita, with Commentary of Mahadeva Suri (Royal Octovo) pp. xxiv+406. Ordinary edition 14-50
Library edition 20-00

9. BRAHMASUTRA SANKARA BHASHYA with Commentary BRAHMA VIDYABHARANA of Advaitānanda 'Exhaustive Edition' with Vijnapana by Panditaraja Sastraratnakara Veppathur Subramanya Sastrigal, Director of Studies, Samskrit Education Society and Bhumika-Tippani and exhaustive Table of Contents by **Pandit S R. Krishnamurthi Sastrigal**, Research Professor, Dr. Rajam Iyer Chair, Samskrit Education Society
Vol. I. (Royal Octovo) Pp. 46+998 100-00
Vol. II (about 1000 pages) under print (ready March 1979) 100.00

10. MANDUKYAGAUDAPADA SANKARA BASHYA with Anubhutisvarupacharya's Tippanam. (Royal Octovo) with Samskrit and English Introduction about Pp. 200 (ready March 79) Under Print.

11. BHAGAVAD GITA with Sankara Bhashya and Anandagiri Tika and Bhasyotkarsha Dipika and new Tippanam. (ready July 79) Under print.

12. LEARNER'S SANSKRIT DICTIONARY (of about 5000 words) with Hindi-Tamil-English meanings Under print (ready May 79)

13. Graded Sanskrit Copy books (1 to 6) 3-50 per set



(All Prices subject to revision) (Packing & Postage Extra)

Also available with (1) Samskrit Education Society. Branch Office : 25 Thanjavour Tank Street, Tiruchirapalli 620-002 and (2) Messrs. B.G. Paul & Co., Booksellers & Publishers, Old No. 4 (New No. 11) Francis Joseph St., Madras. 600 001